2-4



आनन्दभवनग्रन्थमालायाः पञ्चविंशं कुसुमम्

# न्यायसिद्धान्तरत्नमाला

## सौरभटीकासहिता



आचार्य महामण्डलेश्वर स्वामी श्रीकाशिकानन्दगिरि

# भूमिका

लेखक—आचार्य बदरीनाथ शुक्ल भू० पू० कुलपति,
सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी

न्यायशास्त्रस्य विद्यास्थानेषु निरतिशयं महत्त्वम्। यथोक्तं चाणक्येन, उद्धृतं च न्यायसूत्रभाष्ये वात्स्यायनेन :—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां सेयमान्वीक्षिकी मता॥

प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा, तया प्रवर्त्तते विद्या आन्वीक्षिकी न्यायविद्या न्यायशास्त्रम्। तत्रापि नव्यन्यायशास्त्रमात्मनः पारिभाषिकैः पदैः तान्युपजीव्य स्वरूपमासादितवत्या तदीयया परिष्कृत-भाषया तदुपजीविन्या विषयप्रतिपादनशैल्या च संस्कृतस्य समग्रं वाङ्मयं तथा प्रभावितं यथा तत्परिनिष्ठितपरिचयं विना सम्पूर्णस्य वाङ्मयस्य मार्मिको बोधो दौष्कर्यमापद्यत। अत इदमावश्यकमजायत यन्नव्यन्यायस्य पारिभाषिकपदानां साधीयान् परिचयः संस्कृतस्य विदुषां विद्यार्थिनां च सम्पाद्येत। परं कार्यमिदं तादृशेनैव पुंसा शक्यं येन नव्यन्यायशास्त्रं श्रमक्रमाभ्यामधीतं भवेत्। तन्निरूपणानुगुणा प्रतिभा च समुपार्जिता स्यात्।

महामण्डलेश्वरो मनीषी स्वामी श्रीकाशिकानन्दमहाराज ईदृशेषु पुंस्वन्यतमो येन वाराणस्यां चिरमवस्थाय नव्यन्यायशास्त्रं निपुणमात्मसाद-कारि सम्बद्धशास्त्रान्तरेष्वपि अन्तःप्रवेशाय परिश्रमो व्यतानि। अधुना स बम्बईनगरे निजाश्रमं प्रतिष्ठाप्य स्वायत्तं मुद्रणालयं च संस्थाप्य शास्त्रा-ध्ययनाध्यापनप्रधानं ग्रन्थनिर्माणपरायणं तपःपूतं जीवनमुज्ज्वलतरं रचयन् विराजते। एष आनन्दस्य विषयो यत्तेन नव्यन्यायस्य पारिभाषिकपदानां स्वोपज्ञव्याख्योपेतैः स्वकीयैः संस्कृतपद्यैः सुबोधं प्रतिपादनं विद्वद्विद्यार्थिजनो-पकाराय निर्वर्त्य प्रकाशमुपनेतुं प्रयत्यते आशास्यते कतिषु दिनेष्वेव तदीयोऽयं ग्रन्थो जिज्ञासूनां हस्तगतो भवेत्।

श्रीमतो मान्यस्य तस्य महाराजस्य स्निग्धं निर्देशं मूर्ध्ना दधानेन मया तद्विषये किमपि प्राथमिकं वक्तव्यमत्र संक्षेपेणोपन्यासितुं चेष्टयते। उदाहरण-

तयोपस्थाप्यते च कतोनां पदानां सम्बन्धे तदीया निरूपणनैपुणी।

महाराजेन नव्यन्याये नितरां प्रसिद्धं प्रतियोगिनमाश्रित्य "यस्याभावः स प्रतियोगी" इति लक्षणमर्चाचि। यस्यायमाशयो यद् यस्य पदार्थस्य क्वचिदभावो भवति सोऽभावस्य प्रतियोगी कथ्यते। वायौ रूपस्याभावाद् रूपमभावप्रतियोगि, सरसि वह्नेरभावाद् वह्निरभावप्रतियोगी। ज्ञेयत्व-वाच्यत्वादीनां क्वचिदप्यभावस्यासत्त्वेन ते न प्रतियोगिनः। संयोगादिना व्यधिकरणसम्बन्धेन तेषामपि सर्वत्राभावात् तेऽपि तादृशसम्बन्धेन भवतोऽभावस्य प्रतियोगिनः। उक्तं लक्षणं "येन सम्बन्धेन यस्याभावः स तेन सम्बन्धेनाभावस्य प्रतियोगी" इत्यर्थे पर्यवस्यति। भवत्यत्र प्रश्नः कस्तावदर्थो "यस्याभावः स प्रतियोगी" इति लक्षणवाक्यस्य, यदि यत्प्रतियोगिकोऽभावः स प्रतियोगी, तदा स्पष्टोऽन्योन्याश्रयः। यत्पदार्थ प्रतियोगित्वे ज्ञाते उक्तार्थज्ञानं ज्ञाते चोक्तार्थे प्रतियोगित्वज्ञानमित्यतितरां ज्ञायमानत्वात्। यदि 'येन सम्बद्धः अभावः स प्रतियोगी' इत्येवमर्थ उक्तलक्षणस्य संभवेत्तदा सर्वाभावानां सर्वैरेव पदार्थैः येन केनचित् सम्बद्धतया सर्वेषां सर्वाभावानां प्रतियोगित्वं प्रसज्ज्येत। अतो मन्ये महाराजस्योक्तं लक्षणमुपन्यस्यतोऽयमाशयतो यत् "यस्याभावः स प्रतियोगी" इत्युच्यमाने यत्पदोत्तरं श्रूयमाणया शेषषष्ठ्या यत्पदार्थाभावपदार्थयोः कश्चन सम्बन्धो बोध्यते, स च संयोगाद्यात्मनाऽनुपपद्यमानः कश्चिदन्य एव, स एव नव्यन्याये प्रतियोगित्वसम्बन्धेन व्यवहृतः, सम्बन्धश्च नियमेन सप्रतियोग्यनुयोगिकः। अतः सोऽपि यत्पदार्थप्रतियोगिकोऽभावपदार्थानुयोगिकश्चेति धिया यत्पदार्थः अभावानुयोगिकस्य तत्सम्बन्धस्य प्रतियोगितयाऽभावप्रतियोगी, अभावश्च तदनुयोगितया तत्सम्बन्धस्यानुयोगीत्युच्यते। तत्रेदं फलितं यद् यत्पदार्थे द्विविधा प्रतियोगिता, एका प्रतियोगित्वसंसर्गीया अपरा अभावीया। तत्र संसर्गीया संसर्गानवच्छिन्ना, तस्याः संसर्गावच्छिन्नत्वेऽनवस्थापत्तेः प्रयोजनाभावाच्च। अभावीया च संसर्गावच्छिन्ना, संसर्गश्चाऽभावप्रतियोगितवच्छेदकः, अभावे घटस्य प्रतियोगित्वं संसर्गः इति व्यवहारः। स च घटस्याभाव इति प्रतीतिसाक्षिक इति। प्रतियोगिता च यत्र प्रतियोगिनोऽनेके प्रतियोगितावच्छेदकं चैकं तत्र प्रतियोगितावच्छेदक स्वरूपा, प्रतियोगिस्वरूपत्वे गौरवात्, यथा घटाभावादौ। यत्र च प्रतियोगी एकः प्रतियोगितावच्छेदका अनेके तत्र प्रतियोगित्वरूपा लाघवात्। यथा शब्दवदभावादौ। आद्यस्थले प्रतियोगितातदवच्छेदकतयोरैक्येऽपि जात्याद्या-

त्मनो घटत्वादेः स्वरूपतोऽवच्छेदकत्वं, तदात्मनः प्रतियोगित्वस्य च प्रतियोगितात्वेनावच्छेद्यत्वम्। द्वितीयस्थले प्रतियोगिनो नित्यद्रव्यतयाऽवृत्तित्वेऽपि तदात्मनः प्रतियोगितायाः प्रतियोगितात्वेन वृत्तित्वम्। यत्र च प्रतियोगितत्तावच्छेदके चोभे अनेके यथा दण्डवदभावादौ तत्राभावे साक्षाद् विशेषणरूपा प्रतियोगिता। न तु प्रतियोगितावच्छेदकतावच्छेदकस्वरूपा, तस्याः स्वाश्रयाश्रयत्वसम्बन्धेन प्रतियोगित्वव्यवहारनियामकत्वसंभवेऽपि प्रतियोगित्वान्तरव्यवहारतुल्यतया तथा नियामकत्वे मानाभावात्। प्रतियोगितात्वं च अखण्डोपाधिः। तस्य सामान्येऽन्तर्भावः। सामान्यं च द्विविधं जातिरूपमखण्डोपाधिरूपं च। अतो न पदार्थत्वस्य द्रव्यान्द्यन्यतमत्वनियमस्य भङ्गः। तत्राखण्डत्वं निरवच्छिन्नप्रकारताश्रयत्वम्, उपाधित्वं जातिभिन्नत्वे सति सामान्यत्वम्, जातित्वं च नित्यत्वे सत्यनेकसमवेतत्वम्। जात्यखण्डोपाधिसामान्यत्वं च कालिकदैशिकविशेषणतान्यतरसम्बन्धेन वृत्तिमत्त्वे सति नित्यत्वे सति एकमात्रवृत्तित्वसमवेतत्वोभयाभाववत्त्वम्। आकाशादिष्वतिव्याप्तिवारणाय प्रथमसत्यन्तम्, घटादिष्वतिव्याप्तिवारणाय द्वितीयसत्यन्तम्, अभावप्रतियोगिविधया एकमात्रवृत्तित्वानुक्तौ जातावव्याप्तिः, समवेतत्वानुक्तौ तद्व्यक्तित्वाद्येकमात्रवृत्त्युपाधिष्वव्याप्तिः।

ननु संसर्गीयप्रतियोगिताया इव अभावीयप्रतियोगितायामपि सम्बन्धावाच्छिन्नत्वं लाघवान्मास्तु इति चेन्न; यत्र अभावप्रतियोगिनौ प्रतियोगितावच्छेदकौ च समानौ यथा संयोगेनघटाभावसमवायेनघटाभावयोः तत्र तयोः प्रतियोगितायाः सम्बन्धानवच्छिन्नत्वे तयोः भेदो न स्यात्। अभावभेदकस्य प्रतियोगिताभेदस्याभावात्, तत्तदभावरूपनिरूपकभेदेन तदीयप्रतियोगितयोः भेदात् तन्निबन्धनः तयोर्भेदः न स्वीकर्त्तुं शक्यः। प्रतियोगिताभेदाभावेन निरूपकीभूताभावयोः भेदस्यासिद्धत्वात्। न च ध्वंसप्रागभावोययोः प्रतियोगितयोः धर्मसम्बन्धाभ्यामनवच्छिन्नत्वेन भेदासिद्ध्या तन्निबन्धनो ध्वंसप्रागभावयोः भेदो न स्यादिति वाच्यम्। सर्वत्रावच्छेदकभेदेनैव प्रतियोगिताभेदः तत एव च अभावभेदः इत्यनियसात्। ध्वंसप्रागभावस्थले प्रतियोगिताभेदः प्रकारान्तरमूलक एव। तथा हि ध्वंसः स्वप्रतियोगिव्यभिचारी अवयवसंयोगनाशाद् जायमानस्य अवयवनिष्ठत्वात्, अवयवनाशाच्च जायमानस्य कालनिष्ठत्वात्। प्रागभावश्च स्वप्रतियोगिव्याप्यः। तदाश्रये एव तत्प्रतियोगिनः उत्पादनियमात्। एवं च स्वप्रतियोगिव्यभिचारित्वस्वप्रतियोगिव्याप्यत्वाभ्यां ध्वंसप्रागभावयोः भेदस्य सिद्ध्या तदात्मकनिरूप-

कभेदेन तदीयप्रतियोगितयोः भेदस्य सिद्धतया तन्मूलकस्यापि तयोर्भेदस्य संभवात् ।

संयोगेन रूपाभावस्य स्वरूपसम्बन्धेन रूपाभावस्य च मिथः सामनैयत्येन तयोरैक्यात् तत्र भेदोपपत्तये प्रतियोगिताभेदस्यानावश्यकतया तदीयप्रतियोगितयोः सम्बन्धावच्छिन्नत्वमनावश्यकमिति न वाच्यम् । तत्प्रतियोगितयोः सम्बन्धानवच्छिन्नत्वे संयोगेन रूपवत्ताबुद्धौ संयोगेन रूपाभावनिश्चय एव प्रतिबन्धकः, स्वरूपसम्बन्धेन रूपवत्ताबुद्धौ च तत्सम्बन्धेन रूपाभावनिश्चय एव प्रतिबन्धक इति व्यवस्थाया विलोपप्रसङ्गात् ।

अस्ति प्रतियोगित्वविषयेऽन्यदपि बहु वक्तव्यम् सर्वञ्च महाराजस्य बुद्धिगतप्रायम्, किन्तु ग्रन्थस्य विस्तृतेः सुबोधताभङ्गभयाच्च सर्वमिदं न ग्रन्थघटकमकारि ।

## "अवच्छेदकता"

अवच्छेदकता कस्यापि वस्तुनो निर्वचनस्य प्राणभूतं तत्त्वम् । एनामुपेक्ष्य कार्यकारणभावः, प्रतिबध्यप्रतिबन्धकभावः, व्याप्यव्यापकभावः, अन्योऽप्येवंविधोऽर्थो न निर्वक्तुं शक्यते । यथा गन्धपृथिव्योरस्ति कार्यकारणभावः, गन्धं प्रति पृथिवी कारणमित्यनङ्गीकारे गन्धः कुतः पृथिव्यामेवोत्पद्यते, न जलादिषु, इति प्रश्नस्य समाधातुमशक्यत्वात् । तत्र न तावद् गन्धं प्रति तत्तत्पृथिव्यात्मकद्रव्यं कारणमिति शक्यते स्वीकर्त्तुं गन्धस्य सर्वेषु पृथिव्यात्मकद्रव्येषु उत्पन्नत्वेन तं प्रति तत्तत्पृथिव्यात्मकद्रव्यस्य कारणत्वकल्पनायां व्यतिरेकव्यभिचारात्, तत्पृथिव्यात्मकद्रव्यभिन्नपृथिव्यात्मकद्रव्येऽपि गन्धोत्पादात् तत्पृथिव्यात्मकद्रव्यस्य च तत्र तादात्म्येनासत्त्वात् तत्तद्गन्धं प्रति तत्तत्पृथिव्यात्मकं द्रव्यं कारणमिति कल्पनयापि नाभीष्टसिद्धिः संभवा, जलादिषु तादात्म्येन तत्तत्पृथिव्यात्मकद्रव्याभावस्य तत्तद्गन्धानुत्पत्तिं प्रत्येव प्रयोजकतया जलादिषु तत्तद्गन्धोत्पत्तिवारणेऽपि तत्र गन्धोत्पत्तेः वारयितुमशक्यत्वात् । पृथिव्यात्मकतत्तद्द्रव्यभेदकूटस्य गन्धसामान्यानुत्पत्तिप्रयोजकत्वमभ्युपेत्यापि नैष दोषो वारयितुमुचितः, कूटस्य एकविशिष्टापरत्वेनैव प्रयोजकताया अभ्युपेतव्यतया विशेष्यविशेषणभावे निनिगमनाविरहेण प्रयोजकताया आनन्त्यप्रसङ्गात् । अवच्छेदकताभ्युपगमे तु गन्धत्वस्य कार्यतावच्छेदकत्वं पृथिवीत्वस्य च कारणतावच्छेदकत्वं स्वीकृत्य गन्धं प्रति पृथिवी कारणमिति सामान्यकार्यकारणभावकल्पनायाः

संभवेन जलादिषु गन्धकारणस्य पृथिवीद्रव्यस्य तादात्म्येनाभावात्तत्र गन्धोत्पत्तेर्वारणस्य सुकरत्वान्न कोऽपि दोषः।

एवम् अवच्छेदकतामुपेक्ष्य प्रतिबध्यप्रतिबन्धकभावोऽपि न निर्वक्तुं शक्यते, यथा 'भूतलं घटाभाववत्' इति बुद्धौ 'भूतलं घटवद्' इति निश्चयस्य प्रतिबन्धकत्वं भवति, इदं प्रतिबन्धकत्वं यदि भूतलविशेष्यकघटप्रकारकनिश्चयस्य मन्यते, तदा 'भूतलं द्रव्यवत्' इति निश्चयस्य 'द्रव्यं घटवत्' इति निश्चयस्यापि च उक्तबुद्धिं प्रति प्रतिबन्धकत्वं स्यात्। अवच्छेदकताभ्युपगमे तु भूतलत्वनिष्ठावच्छेदकतानिरूपितभूतलनिष्ठविशेष्यतानिरूपितघटत्वनिष्ठावच्छदकतानिरूपितघटनिष्ठप्रकारताकनिश्चयस्य प्रतिबन्धकत्वोक्त्या उक्तापत्तेः वारयितुं शक्यत्वात्।

न च अवच्छेदकताया अभावेऽपि भूतलत्वनिष्ठप्रकारतानिरूपितभूतलनिष्ठविशेष्यतानिरूपितघटत्वनिष्ठप्रकरतानिरूपितघटनिष्ठप्रकारताकनिश्चयत्वेन प्रतिबन्धकत्वकल्पनया भूतलं घटाभाववदिति बुद्धौ द्रव्यं घटवद् भूतलं द्रव्यवद् इति निश्चययोः प्रतिबन्धकत्वं वारयितुं शक्यते, एकज्ञानीयसमानाधिकरणविषयतयोरभेदेन घटनिष्ठप्रकारतानिरूपितभूतलनिष्ठविशेष्यताया भूतलत्वनिष्ठप्रकारतानिरूषितभूतलनिष्ठविशेष्यतायाश्च मिथोऽभिन्नतया घटनिरूपितभूतलनिष्ठविशेष्यतायां भूतलत्वनिष्ठप्रकारतानिरूपितत्वस्य एवं भूतलनिष्ठविशेष्यतानिरूपितघटनिष्ठप्रकारतायां घटत्वनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यतायाश्च परस्परमभिन्नतया घटनिष्ठप्रकारतायां घटत्वनिष्ठप्रकारतानिरूपितत्वस्य सत्त्वेनोक्तरूपेण प्रतिबन्धकत्वे बाधकाभावाद् इति वाच्यम्। एकज्ञानीयसमानाधिकरणविषतयोरभेदस्यामान्यत्वात्। अन्यथा दण्डः पुरुषाभाववानिति बुद्धौ दण्डः पुरुषवानिति दण्डविशेष्यकपुरुषप्रकारकनिश्चयस्येव रक्तदण्डवत्पुरुषवान् देश इति दण्डप्रकारकतुरुषविशेष्यकनिश्चयस्यापि प्रतिबन्धकत्वापत्तेः रक्तत्वनिष्ठप्रकारतानिरूपितदण्डनिष्ठविशेष्यत्व - पुरुषनिष्ठविशेष्यतानिरूपितदण्डनिष्ठप्रकारत्वयोः एवं दण्डनिष्ठप्रकारतानिरूपितपुरुषनिष्ठविशेष्यत्वदेशनिष्ठविशेष्यतानिरूपितपुरुषनिष्ठप्रकारतयोः परस्पराभिन्नतया दण्डनिष्ठविशेष्यतायाः पुरुषनिष्ठप्रकारतानिरूपितत्वस्य सत्त्वात्।

न च एकज्ञानीयसमानाधिकरणविषयतयोरभेदस्योक्तदोषेण त्याज्यतया तयोरवच्छेद्यावच्छेदकभावो नूनमभ्युपेयः, अन्यथा भूतलं घटश्चेति ज्ञानवत्

भूतलं घटवत् इति ज्ञानस्य समूहालम्बनताया अपि अपरिहार्यत्वात् तस्यापि उक्तज्ञानस्येव परम्परासम्बद्धविशेष्यताद्वयशालित्वात्। तथा च घटाभाववद्भूतलमिति वुद्धौ घटवद्भूतलमितिनिश्चयस्य घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न - घटनिष्ठप्रकारतानिरूपितभूतलत्वनिष्ठप्रकारतानिरूपित - विशेष्यत्वावच्छिन्नभूतलनिष्ठविशेष्यताकनिश्चयत्वेन प्रतिबन्धकत्वस्वीकारे उक्तवुद्धौ द्रव्यं घटवद् भूतलं द्रव्यवद् इति निश्चययोः प्रतिवन्धकत्वस्य वारयितुं शक्यतयाऽवच्छेदकत्वाभ्युपगमो नावश्यक एवेति वाच्यम्। प्रतिबन्धकतावच्छेदककुक्षौ घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्व-भूतलत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वयोः प्रवेशे प्रतिबन्धकतायां गौरवापत्तेः।

न चावच्छेदकताभ्युपगमेऽतिरिक्तविषयताकल्पनाप्रयुक्तं गौरवमिति वाच्यम्। प्रकारतायामेवावच्छेदकतात्वस्य अल्पनीयतया गौरवाभावात्। अवच्छेदकतात्वरूपातिरिक्तोपाधेः कल्पने गौरवं तु न शङ्क्यम्। एकज्ञानीयसमानाधिकरणविषयतयोरवच्छेद्यावच्छेदकभावोपगमे विषयतानिष्ठायां समानाधिकरणविषयतावच्छेदकतायां क्लृप्तस्यावच्छेदकतात्वस्यैव विषयतारूपायामवच्छेदकतायां स्वीकारात्।

व्याप्यव्यापकभावोऽपि अवच्छेदकतां विना निर्वक्तुमशक्यम्। यथा धूमो वह्निव्याप्यः, वह्निश्च धूमव्यापकः भवति, तत्र वह्निव्याप्यत्वं वह्न्यभाववन्निरूपितवृत्त्यभावः, धूमव्यापकत्वं च धूमसमानाधिकरणाभावप्रतियोगित्वाभावः, धूमः वह्न्यभाववति जलह्रदादाववृत्तितया वह्निव्याप्यः। वह्निश्च धूमसमानाधिकरणघटाभावादोनामप्रतियोगितया धूमव्यापकः। तत्र वह्निव्याप्यत्वं यदि वह्न्यभाववन्निरूपितवृत्तिप्रतियोगिकाभावः, तदा मीनशैवालादिरपि वह्निव्याप्यः स्यात् तत्र वह्न्यभाववन्निरूपितवृत्तिप्रतियोगिकस्य तादृशवृत्तिघटोभयाभावस्य सत्त्वात्।

एवं धूमव्यापकत्वं यदि धूमसमानाधिकरणाभावप्रतियोगित्वाभावः, तदा मीनादिरपि धूमव्यापकः, स्यात्, तत्र तादृशप्रतियोगिताप्रतियोगिकस्य धूमसमानाधिकरणाभावप्रतियोगित्वघटत्वोभयाभावस्य सत्त्वात्। अवच्छेदकताभ्युपगमे तु वह्न्यभाववन्निष्ठावच्छेदकताभिन्नवृत्तित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकाभावस्य वह्निव्याप्तित्व स्वीकारेण नोक्तदोषः, वह्न्यभाववन्निरूपितवृत्तिर्नास्तीतिप्रतीतिनिष्ठस्य तादृशाभावस्य मीनादावसत्त्वाद् धूमसमानाधिकरणाभावनिष्ठावच्छेदकता-

भिन्नप्रतियोगितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिता - काभावस्य धूमव्यापकत्वरूपस्वीकारेण नोक्तदोषः, धूमसमानाधिकरणाभावप्रतियोगित्वं नास्तीतिप्रतीतिसिद्धस्य तादृशाभावस्य मीनादावभावात् ।

अवच्छेदकत्वानङ्गीकारे घटो नास्तीतिप्रत्ययविषयोऽभावोऽपि दुर्वचः, तथा हि न तावद् घटप्रतियोगिकाभावस्तथा, घटप्रतियोगिकस्य नीलघटाभावस्य पीतघटवति देशे सत्त्वेन तत्र घटो नास्तीति प्रत्ययापत्तेः । यावद्घटप्रतियोगिकाभाव उक्तप्रत्ययविषयभूताभाव इत्यभ्युपगमे नोक्तदोष इति न शक्यं वक्तुम्, यावद्घटाभावस्य नीलघटनीलघटान्यघटोभयाभावस्य यावद्घटप्रतियोगिकाभावस्य नीलघटवति सत्त्वेन तत्र तादृशप्रत्ययापत्तेः । घटप्रतियोगिकयावदभावः स इत्यापि न सुवचम्, यावतां घटानां प्रातिस्विकरूपेण असर्वज्ञेन ज्ञातुमशक्यतया तस्य तादृशप्रत्ययाभावप्रसङ्गात् । अवच्छेदकतायाः स्वीकारे तु घटत्वे घटाभावप्रतियोगितावच्छेदकतामुपगम्य घटत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितघटत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगिताकाभावस्य घटो नास्तीतिप्रत्ययविषयत्वस्वीकारेण नोक्तदोषाणामवसरः । प्रतियोगिताया व्यधिकरणधर्मावच्छिन्नत्वपक्षे विशेषनिष्ठप्रतियोगितायाः सामान्यधर्मावच्छिन्नत्वपक्षे च घटत्वेन पटाभावस्य घटत्वेन नीलघटाभावस्य च तादृशस्य पीतघटादिमति देशे सत्त्वेन तत्र तादृशप्रत्ययापत्तिस्तु घटत्वगतैकत्ववृत्तिप्रतियोगिताकाभावस्य तादृशप्रत्ययविषयत्वाभ्युपगमेन वारणीया । प्रतियोगितायां घटत्वगतैकत्ववृत्तित्वं च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्वनिरूपकाभावनिरूपितनिरूपकतावच्छेदकतात्वाच्छिन्नप्रतियोगिताकपर्या - प्त्यनुयोगितावच्छेदकत्वैतदुभयसम्बन्धेन । एवम्भूतश्चाभावो घटो नास्तीतिप्रत्ययविषय एवाभावस्तत्प्रतियोगितावच्छेदकत्वस्य तन्निरूपकतावच्छेदकत्वस्य च घटत्व एव सत्त्वेन उक्ताभावप्रतियोगिताया उक्तोभयसम्बन्धेन घटत्वगतैकत्ववृत्तित्वात् । घटत्वेन पटाभावः, घटत्वेन नीलघटाभावश्च न तथा, तयोः प्रथमाभावप्रतियोगितानिरूपकतावच्छेदकत्वयोः क्रमेण घटत्वपटत्वयोः सत्त्वेन, द्वितीयभावस्य च तयोः घटत्वनीलघटत्वयोः सत्त्वेन तत्तदभावप्रतियोगिताया उक्तोभयसम्बन्धेन घटत्वगतैकत्वेऽवृत्तितया तावादाय घटो नास्तीति प्रत्ययाभावसंभवात् ।

अत्रेदं चिन्तयितुं शक्यते यत् प्रतियोगिविशेषिताभावप्रत्ययो विशिष्टवैशिष्ट्यावगाहिमर्यादां नातिशेत इति नियमः । विशिष्टवैशिष्ट्यावगाहित्वं

च विशेषणविशेषणतावच्छेदकद्वयावगाहित्वम्, तथा च विशिष्टप्रकारकाभावबुद्धौ विशेषणस्य यः सम्बन्धो भासते स एव विशेषणतावच्छेदकस्यापि तदवच्छिन्नप्रतियोगिताकत्वेन भासते। यथा रक्तत्वविशिष्टदण्डवैशिष्ट्यावगाहिन्यां रक्तदण्डवान् पुरुष इति बुद्धौ विशेषणस्य दण्डस्य सम्बन्धविधया भासमानः संयोग एव स्वावच्छिन्नप्रतियोगिकसंयोगत्वेन रक्तत्वस्यापि सम्बन्धतया भासते, परं विशिष्टप्रकारकाभावबुद्धौ अभावांशे विशेषणस्य सम्बन्धविधया या प्रतियोगिता भासते सैव स्वावच्छिन्नप्रतियोगितात्वेन विशेषणतावच्छेदकस्यापि सम्बन्धविधया भासते। यथा घटोनास्तीतिबुद्धौ अभावांशे घटसम्बन्धविधया भासमाना प्रतियोगितैव घटत्वावच्छिन्नप्रतियोगितात्वेन घटत्वसम्बन्धविधया भासते। एवं च घटत्वेन पटोनास्तीति बुद्धौ अभावांशे पटसम्बन्धविधया भासमाना घटत्वावच्छिन्नप्रतियोगितैव विशेषणतावच्छेदकस्य पटत्वस्यापि स्वावच्छिन्नप्रतियोगितात्वेन भासते। तथा चोक्तप्रतीतिविषयाभावप्रतियोगितायां घटत्वपटत्वोभयावच्छिन्नतया केवलमेकेन स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन घटत्वगतैकत्ववृत्तिप्रतियोगिताकाभावत्वेन घटोनास्तीति प्रतीतिविषयाभावस्य निर्वचनेन पटाभावस्य तद्भिन्नत्वमुपपद्यते।

एवं घटत्वेन नीलघटो नास्तीति बुद्धावपि अभावांशे नीलघटात्मकविशेषणस्य सम्बन्धविधया या घटत्वावच्छिन्नप्रतियोगिता भासते सैव नीलघटत्वरूपविशेषणतावच्छेदकस्यापि स्वावच्छिन्नप्रतियोगितात्वेन सम्बन्धविधया भासते, तथा चोक्ताभावप्रतियोगितायां घटत्वमात्रनिष्ठावच्छेदकतानिरूपित्वमिव नीलत्व-घटत्वोभयनिष्ठावच्छेदकतानिरूपितत्वमपि लभ्यत इति तदभावप्रतियोगिता न भवति उक्तसम्बन्धेन घटत्वगतैकत्ववृत्तिरिति उक्तैनैकसम्बन्धेन घटत्वगतैकत्ववृत्तिप्रतियोगिताकाभावत्वेन वर्ण्यमानोऽभाव उक्ताभावाद् भिद्यते। अतो घटो नास्तीतिप्रत्ययविषयाभावो घटत्वगतैकत्ववृत्तिप्रतियोगिताकाभावत्वेन यदा वर्ण्यते तदा प्रतियोगितायां घटत्वगतैकत्ववृत्तित्वमुक्तेनैकेनैव सम्बन्धेन वाच्यम् द्वितीयसम्बन्धो नैवोपादेय इति।

## अवच्छेदकता कः पदार्थः

उक्तरीत्या अवच्छेदकताया अवश्यमभ्युपेयत्वसिद्धौ सा सप्तसु पदार्थेषु कुत्रान्तर्भवतीति प्रश्नो जायते, अस्योत्तरमिदं भवति, यदस्ति अवच्छेदकताया द्वैविध्यम्, स्वरूपसम्बन्धविशेषानतिरिक्तवृत्तित्वभेदात्। तत्र स्वरूप-

सम्बन्धविशेषरूपावच्छेदकता अवच्छेदकस्वरूपा, अतो याऽवच्छेदकता अवच्छेदकीभूतयत्पदार्थरूपा, सा तत्रैवान्तर्भवति यत्रावच्छेदकीभूतो धर्मोऽन्तर्भवति। यथा घटाभावप्रतियोगितावच्छेदकता घटत्वरूपा, घटत्वं च जातिविशेष इति तन्निष्ठावच्छेदकतापि जातिरूपा। दण्डो नास्तीतिप्रत्ययविषयाभावप्रतियोगिताया दण्डनिष्ठावच्छेदकता दण्डस्वरूपा, दण्डो द्रव्यमिति तन्निष्ठावच्छेदकतापि द्रव्यरूपा। अनतिरिक्तवृत्तित्वरूपावच्छेदकता च अतिरिक्तावृत्तित्वम्, तच्चाभाववन्निरूपितवृत्तित्वाभावः, स च अभावनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताभाववन्निष्ठावच्छेदकताभिन्नवृत्तितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकताऽनिरूपिततादृशावच्छेदकताद्वयनिरूपितप्रतियोगिताकाभावः। यथा अभावो घटाभावप्रतियोगित्वाभावस्तद्वन्निरूपितवृत्तित्वाभावो घटाभावप्रतियोगितानतिरिक्तवृत्तित्वरूपावच्छेदकता। इयमवच्छेदकता न केवलं घटत्व एव, किन्तु घटनिष्ठेषु कम्बुग्रीवादिमत्त्वादिरूपेष्वपि वर्त्तते, तेषामपि घटाभावप्रतियोगित्वाभाववति पटादाववृत्तित्वात्। एवं चेयमवच्छेदकता सर्वत्राभावरूपैव, अस्या अभाव एवान्तर्भावः।

उभयोरप्येतयोरवच्छेदकतयोरुपगम आवश्यकः, तथाहि यदि स्वरूपसम्बन्धविशेषरूपावच्छेदकता नाभ्युपेयेत तदा घटाभाववद्भूतलमिति बुद्धौ घटवद्भूतलमिति निश्चयस्य घटत्वनिष्ठावच्छेदकतानिरूपितघटनिष्ठप्रकारतानिरूपितभूतलत्वनिष्ठावच्छेदकतानिरूपितभूतलनिष्ठविशेष्यताकनिश्चयत्वेन प्रतिबन्धकत्वे प्रकारतायां घटत्वनिष्ठावच्छेदकतानिरूपितत्वं घटत्वनिष्ठाभावनिरूपितवृत्तित्वनिष्ठप्रतियोगितानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतावत्त्वरूपं वाच्यम्। घटवद्भूतलमितिज्ञानीयप्रकारत्वाभाववन्निरूपितवृत्तित्वाभावप्रतियोगितानिरूपितपरम्परीयोक्तावच्छेदकताया उक्तज्ञानीयप्रकारतायां सत्त्वात्। अनयैवरीत्या भूतलनिष्ठविशेष्यतायां भूतलत्वनिष्ठानतिरिक्तवृत्तित्वरूपावच्छेदकत्वमपि वाच्यम्। तथा च प्रतिबन्धकतावच्छेदके महद् गौरवं स्यात्। स्वरूपसम्बन्धविशेषरूपावच्छेदकतास्वीकारे तु नैष दोषः।

आनतिरिक्तवृत्तित्वं तादृशाभावत्वेनाप्रवेश्य अवच्छेदकतात्वेन प्रवेश्यमिति नोक्तं गौरवमिति भणितिरपि न भद्राय, ह्रदो वह्न्यभाववानितिबुद्धौ ह्रदो वह्निमानितिवत् ह्रदो धूमजनकतेजस्वीतिनिश्चयस्यापि प्रतिबन्धकत्वापत्तेस्तादृशतेजस्त्वस्येव वह्नित्वस्यापि ह्रदो धूमजनकतेजस्वीतिज्ञानप्रकर-

तानतिरिक्तवृत्तित्वात्मकावच्छेदकतावत्तया तन्निश्चयस्यापि वह्नित्वावच्छिन्न-प्रकारताकत्वात् ।

प्रतिबन्धकतावच्छेदकतादिघटकतया स्वरूपसम्बन्धविशेषात्मकावच्छेदकताया अभ्युपगमस्यावश्यकतातोऽन्यापि तदभ्युपगमावश्यकता वर्त्तते। यथा शरीरे आत्मनस्तदीयसुखादीनामवच्छेदकतापि स्वरूपसम्बन्धात्मिकैव वाच्या। अनतिरिक्तवृत्तित्वस्य तत्र दुर्घटत्वात्। आत्मशून्ये शरीरावयवे शरीरस्य वृत्तित्वात्, देशे कालवृत्तितायाः काले देशवृत्तितायाश्चवच्छेदकतापि स्वरूपसम्बन्धात्मिकैव स्वीकार्या। यथा उत्पत्तेः पूर्वं नाशादुत्तरं च इदानीं तन्तुषु न पट इति प्रतीतिस्तन्तुषु कालावच्छेदेन पटाभावमवगाहते, पटकाले चेदानीं कपाले न पट इति प्रतीतिः काले कपालावच्छेदेन पटाभावमवगाहते, तथा च काले तन्तुनिष्ठपटाभावावच्छेदकता कपाले च कपालनिष्ठपटाभाव-वच्छेदकता स्वरूपसम्बन्धरूपैव, नानतिरिक्तवृत्तित्वरूपाऽनावश्यकत्वात्। एवं एकज्ञानीयसमानाधिकरणविषयतयोरवच्छेद्यावच्छेदकभावमते रक्तदण्डवान् पुरुष इतिज्ञानीया रक्तत्वनिष्ठप्रकारतानिरूपितदण्डनिष्ठविशेष्यता तादृज्ञानीयपुरुषनिष्ठविशेष्यतानिरूपितदण्डनिष्ठप्रकरताया अवच्छेदिका भवति। इयमप्यवच्छेदकता स्वरूपसम्बन्धरूपैव, नानतिरिक्तवृत्तित्वरूपा। लाघाद् दण्डरूपादेरपि तादृशप्रकारताया अनतिरिक्तवृत्तित्वात्।

एवमेव हि अनतिरिक्तवृत्तित्वरूपावच्छेदकता नाभ्युपेयेत तदा साध्याभाववदवृत्तित्वरूपा पूर्वपक्षीयव्याप्तिरपि निर्वक्तुं न शक्यते। संभवति लघौ धर्मे गुरुधर्मे स्वरूपसम्बन्धात्मिकायाः प्रतियोगितावच्छेदकताया अनभ्युपगमेन कम्बुग्रीवादिमतः साध्यतायां सद्धेतावव्याप्तिः स्यात्। घटत्वापेक्षया गुरुतरस्य कम्बुग्रीवादिरूपसाध्यतावच्छेदकस्याभावप्रतियोगितानवच्छेदकतया साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्धत्वात्।

एवं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्न-सामानाधिकरण्यरूपा सिद्धान्तव्याप्तिरपि निर्वक्तुं न शक्येत। कम्बुग्रीवादि-मत्साध्यकव्यभिचारिणि कम्बुग्रीवादेर्हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदक-तयाऽतिव्याप्तिप्रसङ्गात्। तदेवं स्वरूपसम्बन्धविशेषरूपावच्छेदकता यथा-स्थिति जात्यादिरूपा, अनतिरिक्तवृत्तित्वरूपावच्छेदकता च सर्वत्राभावरूपेति सिद्ध्यति।

घटत्वनिष्ठा घटाभावप्रतियोगितावच्छेदकता घटत्वेन सह घटाभावप्रतियोगितायाः स्वरूपसम्बन्ध इत्युक्त्याऽयमर्थो निर्गलति यद् घटत्वेन सह घटाभावप्रतियोगिताया घटत्वमेवावच्छेदकतात्वेन सम्बन्धः। तथा च घटत्वस्यावच्छेदकतात्वेन स्ववृत्तितया अवच्छेदकतासम्बन्धस्यानुयोगितानियामकः सम्बन्धः स्वरूपसम्बन्धः, प्रतियोगितायाश्च नियामको निरूपकत्वसम्बन्धः। एवं चा वच्छेदकतायाः स्वरूपसम्बन्धेन घटत्वनिष्ठतया घटत्वं तस्यानुयोगि, अवच्छेदकतानिरूपकत्वस्य घटाभावप्रतियोगितायां सत्त्वेन तादृशप्रतियोगिता तस्य प्रतियोगिभूतेति लभ्यते।

अत्रेयं जिज्ञासा यद् यत्रानुयोगिनः स्वरूपत्वेन सम्बन्धता तत्र कस्तस्यानुयोगितायाः कश्च तत्प्रतियोगिताया नियामकः सम्बन्ध इति, अत्रोत्तरमिदं यद् भूतलेन सह घटाभावादेर्यो भूतलात्मकः सम्बन्धस्तस्यानुयोगितानियामकस्तादात्म्यसम्बन्धः प्रतियोगितानियामकं च स्वनिरूपितस्वात्मकसम्बन्धावच्छिन्नाधेयत्वम्। तथा च भूतलेन सह घटाभावादेर्यो भूतलात्मकः स्वरूपसम्बन्धः स तादात्म्येन भूतलेऽस्तीति भूतलं तदनुयोगि। भूतले स्वरूपसम्बन्धेन घटाभावादेर्वृत्तितया भूतलस्वरूपनिरूपितस्वरूपसम्बन्धावच्छिन्नाधेयताया घटाभावादौ सत्त्वेन घटाभावादेस्तत्प्रतियोगिता, तत्सम्बन्धावच्छिन्नाधेयत्वतत्सम्बन्धप्रतियोगित्वयोरभेदेनोक्तकथने आत्माश्रयप्रसङ्गो न शङ्कनीयः, आधेयतात्वेन नियामकतायाः प्रतियोगितात्वेन च नियम्यताया एकत्रापि स्वीकर्त्तुं शक्यत्वात्।

## कार्यकारणता

कार्यता, जन्यता, उत्पाद्यतादिशब्दः समानार्थकाः। कार्यता च कार्येण सह कारणस्य स्वरूपसम्बन्धविशेषः, प्रागभावप्रतियोगिता कारणोत्तरभाविता वा। यथा घटः कार्यं दण्डः कारणम्, तत्र घटे दण्डस्य कार्यता, दण्डे च घटस्य कारणता सम्बन्धः। एवमुत्पत्तेः प्राक् घटस्याभावेन घटः प्रागभावप्रतियोगितया कार्यम्। कारणोत्तरभाविता च कारणाभावप्रयोज्याभावप्रतियोगिता यथा दण्डादीनामभावे घटाद्यभावस्यावश्यंभावेन दण्डाद्याभावप्रयोज्याभावप्रतियोगिताया घटादिः कार्यम्। अथवा कार्यत्वं वस्तुवृत्तित्वम्। वृत्तित्वं च स्वव्यापकत्वस्वनिरूपितान्यथासिद्धिशून्यत्वोभयसम्बन्धेन। स्वव्यापकत्वं च स्वाश्रये स्वाव्यवहितपूर्वक्षणे वर्त्तमानो योऽभावस्तदप्रतियोगित्वम्। दण्डादेः घटं प्रति अनन्यथासिद्धत्वेन घटाश्रये कपाले

घटाव्यवहितपूर्वक्षणे दण्डादेरवश्यं सद्भावेन तत्र तदानीं वर्त्तमानस्य पटाद्यभावस्याऽप्रतियोगित्वेन च घट उक्तोभयसम्बन्धेन दण्डादिवृत्तितया कार्यम् ।

### कार्यता सम्बन्धावच्छिन्ना धर्मावच्छिन्ना च

येन सम्बन्धेन कार्यमुत्पद्यते स कार्यतावच्छेदकसम्बन्धः । यथा घटः समवायसम्बन्धेन कपालयोरुत्पद्यत इति घटनिष्ठकार्यतायाः समवायसम्बन्धोऽवच्छेदकः । कार्यता च समवायसम्बन्धावच्छिन्ना । एवं कपालयोः समवायेन जायमानो घटः काले कालिकसम्बन्धेन, दिशि च दैशिकविशेषणतासम्बन्धेनोत्पद्यत इति कालिकदैशिकविशेषणते अपि घटनिष्ठयोः कालदिङ्निरूपितकार्यतयोः अवच्छेदके भवत इति घटनिष्ठा कालकार्यता कालिकसम्बन्धेन दिक्कार्यता च दैशिकसम्बन्धेनावच्छिन्ना भवति ।

कार्यता सम्बन्धावच्छिन्नेव धर्मावच्छिन्नापि भवति, तथा हि येन रूपेण विशिष्टं सत्कार्यमुत्पद्यते तद् रूपं कार्यतावच्छेदको धर्मः, कार्यता च तदवच्छिन्ना, यथा घटः घटत्वेन विशिष्टः सन् उत्पद्यत इति घटत्वं कार्यतावच्छेदको धर्मः घटनिष्ठा कार्यता च घटत्वावच्छिन्ना । नन्वेवं द्रव्यत्वपृथिवीत्वादिकमपि घटनिष्ठकार्यताया अवच्छेदकं स्याद्, घटत्वेनेव द्रव्यत्वादिनापि विशिष्टस्यैव घटस्योत्पद्यमानत्वादिति चेन्न । वस्तुविशिष्टरूपस्यैव कार्यतावच्छेदकत्वाभ्युपगमात् । वैशिष्ट्यं च स्वव्यापकतावच्छेदकत्व स्वनिष्ठान्यथासिद्धिनिरूपकतानवच्छेदकत्वैतदुभयसम्बन्धेन । घटत्वं हि उक्तोभयसम्बन्धेन दण्डात्मकवस्तुना विशिष्टम् । घटत्वावच्छिन्नं प्रति दण्डस्यानन्यथासिद्धतया दण्डद्वितीयसम्बन्धस्य, घटस्य दण्डव्याप्यतया दण्डप्रथमसम्बन्धस्य च तत्र सत्त्वात् । अतो घटत्वं घटनिष्ठदण्डकार्यताया अवच्छेदकम् । द्रव्यत्वादिकं न दण्डविशिष्टं दण्डं विनापि पटाद्यात्मना द्रव्यस्योत्पत्त्या द्रव्यत्वादौ दण्डव्याप्यतावच्छेदकत्वाऽसंभवेन तत्र दण्डप्रथमसम्बन्धस्यासत्त्वादतो न तद् दण्डकार्यताया अवच्छेदकम् । तद्घटत्वं दण्डस्य व्याप्यतावच्छेदकं व्याप्यरूपेण कारणत्वसंभवे व्यापकरूपेणान्यथासिद्धेः सर्वसम्मततया दण्डत्वावच्छिन्नस्य तद्घटं प्रत्यन्यथासिद्धत्वादतस्तद्घटत्वे दण्डद्वितीयसम्बन्धस्यासत्तया तदुभयसम्बन्धेन तद्घटत्वस्य दण्डात्मकवस्तुविशिष्टत्वाभावान्न तस्य दण्डकार्यतावच्छेदकत्वम् । सामान्यतः कार्यतावच्छेदकत्वं तु तस्य तद्दण्डात्मकवस्तुविशिष्टतया सुस्थितमेव । द्रव्यत्वस्य भावत्वस्य च द्रव्यनिष्ठान्यथासिद्धिनिरूपकतानवच्छेदकत्वेऽपि न द्रव्यकार्यतावच्छेदकत्वं

नित्यद्रव्ये द्रव्यव्याप्यत्वाभावेत तत्साधारणस्य द्रव्यत्वस्य भावत्वस्य चातिरिक्तवृत्तित्वेन द्रव्यव्याप्यतानवच्छेदकत्वात् ।

## का नाम कार्यता

कार्यता न तावत् प्रागभावप्रतियोगित्वरूपा, तथा सति प्रागभावप्रतियोगिताया धर्मसम्बन्धावच्छिन्नत्वे मानाभावेन कार्यताया उक्तयोः धर्मसम्बन्धावच्छिन्नत्वयोरनुपपत्तेः प्रागभावानभ्युपगमे तथा निर्वचनस्यासंभवाच्च । नापि स्वाधिकरणध्वंसानधिकरणक्षणानुयोगिकसम्बन्धप्रतियोगित्वरूपा, सम्बन्धप्रतियोगितायाः सम्बन्धावच्छिन्नत्वस्याप्रामाणिकतया तद्रूपायाः कार्यताया अपि तदनुपपत्तिप्रसङ्गात्, नापि अभावप्रयोज्याभावप्रतियोगित्वरूपा कारणाभावात् कार्याभाव इति व्यवहारस्य सर्वसम्मततया कार्ये तादृशप्रतियोगित्वस्य सम्भवेऽपि तस्य कार्यत्वरूपताया अयौक्तिकत्वात्, व्यापकाभावाद् व्याप्याभाव इति व्यवहारानुरोधेन द्रव्यत्वाभावप्रयोज्याभावप्रतियोगिनः पृथिवीत्वादेस्तत्कार्यत्वातिप्रसक्तेः । न च व्याप्याभावे व्यापकाभावप्रयोज्यत्वं तज्ज्ञाप्यत्वरूपम्, उक्तकार्यत्वकुक्षौ च प्रविष्टं प्रयोज्यत्वं स्वरूपसम्बन्धविशेषरूपमतो नोक्तदोष इति वाच्यम् । कारणाभावात् कार्याभावः, व्यापकाभावाद् व्याप्याभाव इत्युभयोर्व्यवहारयोर्निर्विशेषतया तत्प्रत्याय्यप्रयोज्यत्वयोरुक्तवैलक्षण्यस्य कल्पयितुमशक्यत्वात् ।

अत्रोच्यते । कार्यत्वं हि कार्येण सह कारणस्य सम्बन्धः, स च न कार्यव्यतिरिक्तः किन्तु कार्यस्वरूपतया स्वरूपसम्बन्धविशेषः, तथा च घटनिष्ठं दण्डादिकार्यत्वं घट एव । स च कार्यतात्वेनावच्छेद्यः । घटत्वं च स्वरूपतस्तदवच्छेदकम् । कार्यत्वं चाखण्डोपाधिरूपतया जात्यखण्डोपाधिभेदाद् द्विविधस्य सामान्यस्यान्तर्गतम् । तेन न तेन द्रव्यादिभिन्नस्याष्टमपदार्थस्याभ्युपगमप्रसङ्गः । न च दण्डाद् घटः, तन्तुभ्यः पटः इत्यादिप्रतीतीनां घटपटादौ प्रकारविधयैव दण्डतन्त्वादिजन्यत्वावगाहनात् कार्यत्वस्य सम्बन्धत्वे मानाभाव इति वाच्यम् । 'इदमस्य कार्यम्' इत्याकारकप्रतीतिनियामकतया तत्सिद्धेः ।

अयमाशयः—विशिष्टप्रतीतिर्हि विशेषणं विशेष्यं संसर्गश्चेति त्रिविधैर्विषयैः नियम्यते । यथा दण्डी पुरुष इति विशिष्टप्रतीतिः विशेषणविधया दण्डेन, विशेष्यविधया पुरुषेण संसर्गविधया च तयोः संयोगेन नियम्यते । इदमस्य कार्यमिति प्रतीतिरपि विशिष्टप्रतीतिस्तत्र च कार्यत्वमप्येको विषयः,

अतस्तदपि तस्या नियामकम्, तस्य च विशेषणविधया विशेष्यविधया वा नियामकत्वे तत्प्रतीतेस्तदीयसम्बन्धविषयकत्वमावश्यकं विशेषणताया विशेष्यतायाश्च सम्बन्धगतविषयतानिरूप्यत्वनियमात्। अतस्तस्य संसर्गविधयैव नियत्मकत्वं वाच्यम्, तथा सति तत्प्रतीतौ तत्संसर्गविषयकत्वस्यानभ्युपगमनीयत्वेन लाघवात्। तदेवमुक्तप्रतीतेः संसर्गविधया नियामकत्वेन सिध्यत् कार्यत्वं कार्यस्वरूपानतिरिक्ततया स्वरूपसम्बन्धान्तरेभ्यो विलक्षणतया च स्वरूपसम्बन्धविशेषात्मकमिति निराबाधम्। ननु कार्यत्वस्योक्तप्रतीतौ विशेषणविधयैव भानमुचितं न तु संसर्गविधया, तथा सति तत्प्रतीत्यभिलापके 'इदमस्य कार्यमि'ति वाक्ये कार्यत्वबोधकशब्दस्य प्रयोगासंगतेः, तत्तत्संसर्गगोचरप्रतीतेरभिलापकवचसस्तत्तत्संसर्गबोधकशब्दाघटितत्वनियमाद्दण्डपुरुषयोः संयोगं,तन्तुपटयोः समवायं,कालघटयोः कालिकं, भूतलघटाभावयोः स्वरूपं च संसर्गविधयाऽवगाहमानानां प्रतीतीनां संयोगसमवायादिशब्दाघटितैरेव 'दण्डी पुरुषः' 'तन्तुषु पटः' 'इदानीं घटः' 'भूतले घटाभावः' इत्यादिवचनैरभिलप्यमानत्वात्। अतः कार्यत्वस्य सम्बन्धत्वमप्रामाणिकमेवेति चेन्न, 'द्व्यणुकपरिमाणमणुद्वित्वात् नाणुपरिमाणात्' इत्येतत्प्रतीतिसिद्धात्यन्ताभावप्रतियोगितावच्छेदकसम्बन्धविधया तत्सिद्धेरावश्यकत्वात्। तथा हि प्रतीतेरस्या द्व्यणुकपरिमाणेऽणुपरिमाणजन्यत्वाभावविषयकत्वं नोपगन्तुं शक्यम्। अणुपरिमाणस्याकारणतया तज्जन्यत्वस्याऽप्रसिद्धत्वेन तदभावस्याप्यप्रसिद्धेः, किन्तु जन्यत्वसम्बन्धावच्छिन्नप्रतियोगिताकाणुपरिमाणाभावगोचरत्वमेव स्वीकार्यम्। तथा च जन्यत्वापरनाम्नः कार्यत्वस्य सम्बन्धत्वं निर्विवादम्। जन्यत्वस्य वृत्त्यनियामकतया वृत्त्यनियामकसम्बन्धस्य चाभावप्रतियोगितानवच्छेदकतया नेदमुचितमिति तु न शङ्कयम्, एतत्प्रतीतेः प्रकारान्तरेणानुपपद्यमानतया वृत्त्यनियामकसम्बन्धस्याप्यभावप्रतियोगितावच्छेदकत्वस्वीकारात्। न च तथापि प्रतीतेरस्या निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकाणुपरिमाणाभावावगाहित्वेनाप्युपपत्तिसंभवेनैतदनुरोधेन जन्यत्वस्य सम्बन्धत्वमसंभवदुक्तिकमिति वाच्यम्। 'मनो नाणुपरिमाणात्' इति प्रतीतेर्मनसो नित्यत्वेन तादृशजन्यत्वावगाहित्वासंभवेन जन्यत्वसम्बन्धावच्छिन्नप्रतियोगिताकाणुपरिमाणाभावविषयकत्वस्यैव स्वीकरणीयत्वात्। यदि चोक्तप्रतीतेः प्रामाणिकत्वं नेष्टं तर्हि कार्यत्वं स्वावच्छिन्नान्यथासिद्धिनिरूपकतानवच्छेदकत्वविशिष्टस्ववृत्त्यभावीयावच्छेदकतात्वावच्छिन्न प्रतियोगितानिरूपितप्रतियोगितात्वावच्छिन्नावच्छेद-

कतानिरूपिताभावत्वावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतानिरूपिताव - च्छेदकत्वरूपमभ्युपेयम् । तथा च दण्डत्वावच्छिन्नस्य घटं प्रति अनन्यथासिद्धतया दण्डत्वस्य घटवन्निष्ठाभावप्रतियोगितानवच्छेदकतया च घटे तादृशविशिष्टावच्छेदकत्वस्य सत्त्वेन घटस्य कार्यत्वम् । घटत्वसमवाययोः धर्मसम्बन्धविधया तादृशावच्छेदकतया च तादृशावच्छेदकतात्मककार्यत्वस्य धर्मसम्बन्धविधया तदुभयावच्छिन्नत्वमिति विभाव्यम् ।

## कारणता

कारणता, हेतुता, जनकताप्रभृतयो मिथो नातिरिक्ताः । कारणता च कारणेन सह कार्यस्य स्वरूपसम्बन्धविशेषः । अन्येषां मते अखण्डोपाधिः, बहूनां मते अतिरिक्तपदार्थः, आद्ये मते सम्बन्धस्य सम्बन्धिद्वयनिरूप्यत्वनियमेन कार्यकारणोभयनिरूप्या । अन्यमतयोरपि सा तदुभयनिरूप्या ताभ्यां विना तस्या ज्ञातुमशक्यत्वात् । तत्राद्यं मतं मानाभावान्न मनोरमम् । अन्ये मते अपि तस्या अन्यथा वक्तुं शक्यतया नानुमते मनीषिणाम् । तथा हि कारणता नाम कार्याव्यवहितनियतपूर्ववृत्तिता । सा च कार्यतावच्छेदकसम्बन्धेन कार्याधिकरणे कार्याव्यवहितपूर्वक्षणे वर्त्तमानो यः प्रतियोगिव्यधिकरणोऽभावस्तन्निरूपितकारणतावच्छेकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतो यो धर्मस्तद्वत्त्वम् । यथा समवायसम्बन्धेन घटं प्रति स्वप्रयोज्यविजातोयसंयोगेसम्बन्धेन दण्डः कारणम् । तादृशः संयोगः पटारम्भकः कपालद्वयसंयोगः । तत्र कार्यतावच्छेदकसम्बन्धः समवायस्तेन घटात्मनः कार्यस्याधिकरणं कपालद्वयं, तत्र घटाव्यवहितपूर्वक्षणे वर्त्तमानः प्रतियोगिव्यधिकरणाभावो न स्वप्रयोज्यविजातीयसंयोगसम्बन्धेन दण्डाभावस्तदानीं तत्र तादृशम्बन्धेन दण्डस्य विद्यमानत्वात् किन्तु वेमाद्यभावस्तन्निरूपितकारणतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिता वेमादौ, तदनवच्छेदकं दण्डत्वमिति तदेव तादृशप्रतियोगितानवच्छेदकत्वेन रूपेण कारणत्वम् । उक्तलक्षणे कार्यतावच्छेदकसम्बन्धेनेत्यनुक्तौ संयोगादिना घटाधिकरणे भूतलादौ कारणतावच्छेदकसम्बन्धेन दण्डाभावस्य सत्त्वाद् दण्डे कारणत्वानुपपत्तिरिति तन्निरासाय तदुक्तिः । कार्याधिकरणेत्यत्र कार्यानुक्तौ समवायेन पटाद्यधिकरणे तन्त्वादौ दण्डाभावसत्त्वात्तद्दोषतादवस्थ्यमिति तदपाकरणायतदुक्तिः । कार्याव्यवहितपूर्वक्षणानुक्तौ घटाद्यधिकरणे कपालद्वये घटोत्पत्तेश्चिरपूर्वकाले घटध्वंसकाले च दण्डाभावस्य सत्त्वात्स एव दोष इति तन्निरा-

करणाय तदुक्तिः। तत्र कार्यानुक्तौ यत्किंचिदव्यवहितपूर्वकालत्वेन घटोत्पत्तेश्चिरपूर्वकालस्य ग्रहणसंभवेन पुनः स एव दोषः स्यात्, अव्यवहितपदानुक्तौ तमेव कालमादाय स एव दोष इति तदपाकरणाय तयोरुक्तिः, पूर्वपदानुक्तौ घटोत्पत्तेः काले तदव्यवहितोत्तरकाले च घटवति कपालद्वये घटप्रागभावस्यासत्त्वात्तत्र घटकारणत्वानुपपत्तिः स्यादिति तद्व्युदासाय तद्वचनम्। क्षणपदानुक्तौ घटोत्पत्तेरव्यवहितपूर्वमुत्पन्नस्य घटोत्तरकालं यावत् स्थायिनो द्रव्यात्मककालस्य घटाव्यवहितपूर्वकालतया ग्रहणसंभवेन तत्काले घटध्वंसदशायां कपालद्वये दण्डाभावस्य सत्त्वेन दण्डस्य पूर्ववत् कारणत्वानुपपत्तिः स्यादिति तन्निरासाय तदुक्तिः। प्रतियोगिव्यधिकरणत्वानुक्तौ कपालयोः विजातीयसंयोगः कपालयोर्यद्भागे न भवति तद्भागावच्छेदेन मिथः संयुक्तेऽपि कपालद्वये घटाव्यवहितपूर्वक्षणे तादृशसंयोगसम्बन्धेन दण्डाभावस्य सत्त्वात् तद्दोषतादवस्थ्यं स्यादिति तदपसारणाय तदुक्तिः। प्रतियोगितायां कारणतावच्छेदकसम्बन्धावच्छिन्नत्वं सम्बन्धान्तरेण दण्डाभावमादाय दण्डस्य कारणत्वानुपपत्तिपरिहाराय प्रविष्टम्। लाघवात् तादृशप्रतियोगित्वाभावस्य कारणतात्वे चालनीन्यायेन घटवत्सु कपालद्वयेषु तत्तद्दण्डाभावस्य सत्त्वेन दण्डस्य कारणत्वं नोपपद्येतेति तदुपपत्तये तादृशप्रतियोगितानवच्छेदकधर्मवत्त्वपर्यन्तानुधावनम्। व्याप्यवृत्तेरवच्छेदकानभ्युपगमे कपालस्य तादात्म्येन घटकारणत्वानुपपत्तिः, घटवति कपालद्वये घटाव्यवहितपूर्वक्षणावच्छेदेन सतोऽभावस्य प्रतियोगितायां तादात्म्यसम्बन्धावच्छित्तत्वासंभवादिति तत्परिहाराय कार्याव्यवहितपूर्वक्षणावच्छेदेनेत्यपहाय कार्याधिकरणवृत्तितायां निरवच्छिन्नत्वं निवेश्यं, प्रतियोगिव्यधिकरणत्वं च प्रयोजनाभावान्न देयम्। वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वमते विषयतादिवृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वमते विषयतादिवृत्त्यनियामकसम्बन्धेन कारणत्वोपपत्तये प्रतियोगितायां कारणतावच्छेदकसम्बन्धावच्छिन्नत्वमनिवेश्य कारणतावच्छेदकसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नत्वकारणतावच्छेदकधर्मावच्छिन्नत्वोभयाभावः प्रवेश्योऽतः सम्बन्धान्तरेण कारणान्यस्याभावमादाय न वृत्त्यनियामकसम्बन्धेन कारणत्वानुपपत्तिर्नं वाऽन्यसम्बन्धेन कारणाभावमादायासंभवापत्तिः। प्रमेयत्वादीनां तादृशतया घटकारणतात्वापत्तिवारणायोक्तानवच्छेदकत्वमन्यथासिद्धतानवच्छेदकत्वेन विशेषणीयम्, तथा च प्रमेयत्वादिना दण्डादेरन्यथासिद्धतया न दोष इत्यलं विस्तरेण।

## स्वस्वामिभावः

स्वस्वामिशब्दयोः द्वन्द्वोत्तरं श्रूयमाणो भावशब्दः "द्वन्द्वोत्तरं श्रूयमाणस्तद्घटकेन प्रत्येकेन सम्बध्यते" इति न्यायेन स्वस्वामिशब्दाभ्यां सम्बध्य स्वभावं स्वामिभावं च ब्रूते। तत्र स्वभावः स्वत्वं स्वामिभावश्च स्वामित्वरूपतां धत्ते। उक्तव्युत्पत्त्या स्वत्वनिरूपितं स्वामित्वं स्वामित्वनिरूपितं स्वत्वं वा न लभ्यते, अत उक्तशब्देन स्वस्वामिभावस्यैकसम्बन्धस्य लाभो न जायते। कथंचिदुक्तार्थस्य लाभे सायासं सम्पादितेऽपि तयोरेकसम्बन्धता न युज्यते, संसर्गताद्वयाश्रयतया परस्परासंसर्गत्वापत्तेः। अतः स्वत्वं स्वामित्वं च पृथक् पृथगेव सम्बन्धौ। तयोः प्रत्ययश्च चैत्रस्य धनम्, मैत्रस्य गौरित्यादि व्यवहारतो निष्पद्यते। तत्र चैत्रादिशब्दोत्तरषष्ठ्या यदि स्वत्वमर्थस्तदा तत्र चैत्रादेः निरूपितत्वसम्बन्धेनान्वयः। तस्य च धनादावाश्रयतासम्बन्धेनान्वयः। यदि चोक्तषष्ठ्याः स्वामित्वमर्थस्तदा तत्र चैत्रादेः निष्ठत्वसम्बन्धेन तस्य च धनादौ निरूपकतासम्बन्धेनान्वयः। फलतया तादृशवाक्यानां चैत्रादिनिरूपितस्वत्ववद्धनादि, चैत्रादिनिष्ठस्वामित्वनिरूपकधनादिरूपोऽर्थो निष्पद्यते।

स्वत्वस्वामित्वयोः स्वरूपे विचार्यमाणे तयोः सम्बन्धिभिन्नत्वं न सिध्यति। यथा स्वत्वं यथेष्टविनियोगकर्मत्वयोग्यतारूपम्, मनुष्यो यद् वस्तु स्वेच्छया विनियोक्तुमर्हति, यद् वस्तु मनुष्येच्छानुसारं विनियोक्तुमर्हं तदेव तस्य स्वमुच्यते। इदं क्रयविक्रय, विनिमय, वेतनादिद्वारेणोत्पद्यते, विक्रयेण विक्रेतुःस्वत्वं नाश्यते, क्रयेण कर्त्तुः स्वत्वमुत्पद्यते, दानेन दातुः स्वत्वं नाश्यते, प्रतिग्रहेण प्रतिग्रहीतुः स्वत्वमुत्पद्यते इत्यादि। यथा चैत्रो मैत्रात् तदीयां गां क्रीणाति, मैत्रश्च विक्रीणाति, तदा क्रीते गवि चैत्रस्य स्वत्वं जायते विक्रीते च मैत्रस्य स्वत्वं क्षीयते। एवं यदा राजा ब्राह्मणाय गां ददाति तदा दत्तायां गवि राज्ञः स्वत्वं हीयते ब्राह्मणस्य तत्परिग्रहेण तत्र स्वत्वमुत्पद्यते। एवमेव विनिमयवेतनादिसन्दर्भेऽपि बोध्यम्।

अत्र विचार्यमिदं विद्यते यद् यथेष्टविनियोगकर्मत्वयोग्यत्वरूपं लक्षणं स्वत्वं किमात्मकमम् द्रव्यादिपदार्थेषु तस्य कुत्रान्तर्भावो यस्य क्रयविक्रयादिमाध्यमेन जन्मविनाशौ सम्पद्येते। तस्य द्रव्यत्वेन गवादिरूपे अन्त्यावयविनि द्रव्ये उत्पत्तिरसंभवा, गुणकर्मादिरूपमपि तस्य वक्तुमशक्यं प्रमाणसिद्धानां गुणकर्मादीनां क्रयादिद्वारेणोत्पत्त्यसिद्धेः। अत एतदेवोच्यमानं युक्तं प्रतीयते

यत् क्रयादितो यद् वस्तु क्रेतुः यथेष्टविनियोगयोग्यतां लभते तत्र क्रीते वस्तुनि क्रेतुः क्रयोत्तरकालसम्बन्ध एव प्रतिगृहीते च प्रतिग्रहीतुः प्रतिग्रहोत्तरकालसंबन्ध एव स्वत्वम्। वस्तुकालयोः सम्बन्धः कालिक इत्युच्यते। कालिकसम्बन्धश्च वस्तुकालाभ्यां भिन्नत्वाभावेन स्वरूपसम्बन्धेन व्यपदिश्यते। अतः स्वत्वमपि स्वरूपसम्बन्धविशेष एव। एवमेव विक्रयेण विक्रीते वस्तुनि विक्रेतुः प्रथमतो विद्यमानस्य क्रयोत्तरकालसम्बन्धरूपस्य स्वत्वस्य नाशो विधीयते, क्रयेण च क्रीते वस्तुनि नवक्रयकर्त्तुः क्रयकालोत्तरसम्बन्धरूपस्य स्वत्वस्योत्पत्तिः सम्पाद्यते। अत्रेदमप्यवधेयं यद् यद् वस्तु पूर्वस्वामिना न क्रीयते किन्तु उत्पादनविधिना श्रमेणोत्पाद्यते, यथा कृषकेण उत्पादिते अन्नादौ, तत्र स्वत्वं न क्रयोत्तरकालसम्बन्धरूपमपि तु तदीयश्रमादिप्रयुक्तं सहजं स्वत्वं यद् विक्रयादिपूर्वकालसम्बन्धरूपम्।

स्वत्वस्योक्तस्वरूपमाश्रित्यायं प्रश्नो भवति यद् विक्रीते वस्तुनि विक्रेतुः क्रयोत्तरकालसम्बन्धरूपस्य स्वत्वस्य विक्रयान्नाशो न भवितुमर्हति विक्रेतुः पूर्वकृततद्वस्तुक्रयोत्तरत्वस्य उत्तरस्मिन्नखिले काले विद्यमानत्वात्, एतदुत्तरमिदं वक्तुं शक्यं यत् क्रेतुः क्रयप्रयुक्तं स्वत्वं क्रीते तावदवतिष्ठते यावत् सः अन्यस्मै न विक्रीणाति। अतः स्वत्वमित्थं परिभाषितव्यं यद् अमुकेन मनुष्येण अमुकस्य वस्तुनः क्रयोत्तरस्य तेनान्यमनुष्याय तद्वस्तुनो विक्रयस्यानुत्तरो यः कालस्तेनामुकवस्तुनः सम्बन्धः तद्वस्तुनि अमुकस्य मनुष्यस्य स्वत्वम्।

नव्यन्यायपद्धत्या परिभाषेयमिदमित्थं प्रस्तुतिं प्रतिपद्यते। तन्निरूपितस्वत्वं नाम तत्कर्त्तृकक्रयविशिष्टसम्बन्धः। सम्बन्धे क्रयवैशिष्ट्यं स्वकर्मप्रतियोगिकत्वस्वविशिष्टकालानुयोगिकत्वोभयसम्बन्धेन। काले स्ववैशिष्ट्यं स्वोत्तरत्वस्वविशिष्टविक्रयानुत्तरत्वोभयसम्बन्धेन। विक्रये स्ववैशिष्ट्यं स्वसमानकर्मकत्व स्वसमानकर्त्तृकत्वोभयसम्बन्धेन।

विक्रयोत्तरं विक्रीतवस्तुनः क्रयोत्तरकालो विक्रयानुत्तरकालो न भवति। अतो विक्रयानुत्तरत्वनिवृत्या तद्विशिष्टस्य विक्रेतुः क्रयोत्तरकालस्य उक्तविशिष्टकालसम्बन्धरूपं विक्रेतुः स्वत्वं विक्रयान्निवृत्तमिति व्यवह्रियते।

## स्वामित्वम्

स्वामित्वरूपावधारणं स्वत्वस्वरूपावधारणाधीनम्। अतः स्वत्वस्वरूपे निरुक्ते स्वामित्वरूपमनायासं निरुक्तं भवति। यथा यथेष्टविनियोगकर्मत्व-

योग्यता स्वत्वं तथैव यथेष्टविनियोगकर्तृत्वयोग्यता स्वामित्वम्। यद् वस्तु यथेष्टं विनियोक्तुं योऽधिकृतो भवति स तस्य स्वामीकथ्यते। इत्थं वस्तुनो यथेष्टं विनियोगाय अधिकार एव वस्तुनः स्वामित्वम्। वस्तुनो यथेष्टविनियोगाधिकारो यथोष्टविनियोगे कृतेऽपराधराहित्यम्। तदेवं वस्तुनः स्वामित्वं नाम तस्य यथेष्टविनियोगेऽपराधराहित्यम्। क्रयादिद्वारेण वस्तुनि स्वत्वाधिगमे एव उक्तं स्वामित्वं सिध्यति।

उक्ते स्वत्व स्वामित्वे संबन्धिभ्यां भिन्ने भवत एव संबन्धकार्यकारितया स्वरूपसंबन्धश्रेण्यां गण्येते।

## निरूप्यता निरूपकता

ययोः वस्तुनोरेकज्ञानेऽपरस्य ज्ञानमपेक्ष्यते तयोः निरूप्यनिरूपकभावो भवति। निरूप्यशब्दो बोध्यज्ञाप्यादिरूपमर्थं ब्रूते। निरूपकशब्दो बोधकज्ञापकादिरूपमर्थं वक्ति यथा ज्ञानशब्दे श्रुते ज्ञानबोधोत्तरं कस्य ज्ञानमिति जिज्ञासा जायते। तदुत्तरे घटस्य ज्ञानं पटस्य वा ज्ञानमित्युक्ते जिज्ञासाशाम्यति। एतेन प्रतीयते यद् ज्ञानं विषयज्ञानं विना पूर्णतां न लभते। विषयो ज्ञानज्ञानस्य पूर्णतां विधत्ते। अतएव विषयो ज्ञानस्य बोधको ज्ञानं च विषयस्य बोध्यमुच्यते। अयमेवार्थः 'ज्ञानं विषयनिरूप्यम्' इत्यादिरूपेण ग्रन्थेपूल्लेखो लभ्यते। अनेन प्रकारेण ज्ञाने निरूप्यता विषये च निरूपकता भवति, तदेवं निरूप्यता निरूपकता निरूप्यनिरूपकभावशब्दव्यपदेश्या ज्ञानविषययोः सम्बन्धः कथ्यते। एष च सम्बन्धः सम्बन्धिभ्यां भिन्नत्वाभावेन स्वरूपसम्बन्धमध्ये गण्यते।

प्रतियोग्यनुयोग्यभावयोरपि वर्त्तत एवैष सम्बन्धः। अभावशब्देनाभावे बोधिते कस्याभाव इति जिज्ञासा सपदि जायते, घटस्याभावः पटस्याभाव इत्याद्युक्ते जिज्ञासा निवर्त्तते। एतेनापि स्पष्टं यदभावस्य बोधः प्रतियोगिनो बोधं विनाऽपूर्ण एवावतिष्ठते। प्रतियोगिनैवाभावबोधः पूर्णतां नीयते। अतः प्रतियोगिनि निरूपकता अभावे निरूप्यता च स्पष्टा, इत्थमेव घटादेः प्रतियोगित्वेन बोधे घटादिः कस्य प्रतियोगीति जिज्ञासा सद्य एवोदेति। घटादिः स्वाभावप्रतियोगीत्युत्तरेण जिज्ञासोपशाम्यति। एतेन स्पष्टं यद् घटादिप्रतियोगित्वेनाभावज्ञानादेव पूर्णतया ज्ञायते। तदेवं प्रतियोगी निरूप्यः अभावो निरूपक इति स्पष्टतया द्वयोस्तयोः निरूप्यनिरूपकभावः।

एवमेव दण्डादौ कारणत्वेन चर्चिते दण्डादिः कस्य कारणम्, घटादौ कार्यत्वेन चर्चिते घटादिः कस्य कार्यमिति जिज्ञासोत्पद्यते । दण्डादिः घटादेः कारणं घटादिः दण्डादेः कार्यमित्युक्त्या जिज्ञासा निवर्त्तते । एतावता स्पष्टं यद् दण्डादेः कारणतया घटादेश्च कार्यतया ज्ञानं क्रमेण घटादिज्ञानेन दण्डादिज्ञानेन च पूर्यते । अतः दण्डादिः कार्यत्वेन घटादिज्ञानपूरकतया घटादिनिष्ठकार्यतानिरूपकः घटादिश्च दण्डादिनिष्ठकार्यज्ञानपूरकतया दण्डादिनिष्ठकारणतानिरूपक इति घटादिदण्डादिनिष्ठकार्यत्वकारणत्वयोः मिथो निरूप्यनिरूपकभावः ।

एवमेव घटादीनामाश्रयत्वेन चर्चायां घटादिः कस्याश्रयः, गुणादीनामाश्रितत्वेन चर्चायां गुणादिः कुत्राश्रित इति जिज्ञासा जायते । घटादयो गुणादीनामाश्रयाः गुणादयो घटादिष्वाश्रिता इति वचसोक्तजिज्ञासयोः शान्त्या स्पष्टमिदं यद् घटादय आश्रयत्वेन गुणादिज्ञाप्या गुणादयश्चाश्रितत्वेन घटादिज्ञाप्यास्तदेवाधारत्वाधेयत्वयोः निरूप्यनिरूपकभावः ।

उक्तरीत्यैव गुरुशिष्य, पितृपुत्र, पतिपत्नी, गृहगृहपति, क्रियाकर्तृ, क्रियाकर्मादिष्वपि निरूप्यनिरूपकभावस्वीकारप्रयोजनं प्रत्येतुं शक्यते । प्रकारताविशेष्यता संसर्गतासु विषयताविषयित्वयोः उद्देश्यत्वविधेयत्वयोरन्ययोरपीदृशविषययोः निरूप्यनिरूपकभावो वेदितव्यः ।

अत्र विचारणीयमिदं भवति यन्निरूप्यत्वनिरूपकत्वयोः कुत्रान्तर्भावो भवितुमर्हति पदार्थसप्तके, किं च निरूप्यत्वनिरूपकत्वे यदि बोध्यत्वबोधकत्वरूपे तदा निरूप्यज्ञाने निरूपकज्ञानस्यापेक्ष्यते निरूपकज्ञाने निरूप्यज्ञानस्यापेक्ष्यते इति प्रसज्यमानोऽन्योन्याश्रयः कथं परिहार्यः । प्रथमस्योत्तरेत्विदं वक्तुमर्हं यन्निरूप्यत्वं निरूपकत्वं च यस्य सम्बन्धः स ततो न भिन्नो, यस्य सम्बन्धः स यत्रान्तर्भवति तत्रैव तस्यान्तर्भावो यथा वह्निनिष्ठविधेयता पर्वतनिष्ठोद्देश्यतानिरूपिता, पर्वतनिष्ठोद्देश्यतया निरूपितत्वेन पर्वतनिरूपिता, पर्वतनिष्ठोद्देश्यता च पर्वतरूपेति तयोः निरूप्यत्वसम्बन्धः पर्वतरूपतया पर्वतस्य च द्रव्यात्मतया द्रव्य एव तदन्तर्भावः ।

द्वितीयस्योत्तरे निरूप्यत्वनिरूपकत्वे वस्तुतो न बोध्यत्वबोधकत्वरूपे, तथा कथनं तु तयोः स्वरूपस्य बोधसंकेतमात्रम् । उभयोऽपि ते स्वरूपसम्बन्धरूपे एव । तत्र मानं च दण्डादिः घटादेः कारणम् । घटादिश्च दण्डादेः कार्यमिति व्यवहार एव । तयोरभावे कारणत्वकार्यत्वादीनां योजनस्य दुष्करणतया उक्तव्यवहाराणां निर्वचनासंभवात् ।

## सामग्री

सामग्रीशब्दोऽप्येक एतादृशो विशिष्टः शब्दो यदर्थविषये किमपि कथनमावश्यकम्।

किमपि कार्यमेकस्मादेव कारणान्न भवति किन्तु कारणसामग्रीतो भवति। कारणसमुदायः सामग्रीत्युच्यते, किन्तु सामग्र्या इदं निर्वचनमपूर्णं यतः कार्यस्यैकजातीयसमुदायोऽप्येवं सामग्री सम्पद्यते, यथा घटस्य दण्डचक्राद्यनेककारणेषु दण्डसमुदायस्यापि उक्तरीत्या सामग्रीत्वेऽपि तन्मात्राद् घटो नोत्पद्यते, एष दोषो विभिन्नकारणानां समुदायस्यापि सामग्रीत्वकथनेन वारयितुं न शक्यते दण्डानामपि परस्परं भिन्नत्वेन तत्समुदायस्य सामग्रीत्वापरिहारात्। विजातीयकारणानां समुदायस्यापि सामग्रीत्वोक्त्या दोषतो न मुक्तिः, दण्डचक्रचीवराणां विभिन्नजातीयघटकारणानां समुदायमात्रादपि घटानुत्पत्तेः। कार्यस्य निखिलकारणानां समुदायस्यापि सामग्रीत्वोक्तिर्न निर्दोषा यत एकैकदण्डचक्रचीवरकुलालकपालकपालद्वयसंयोगसमुदायोऽप्येवं सामग्री न स्यात् यतोऽयं समुदायः एकैकघटकारणानामपि न समुदायः किम्पुनः निखिलघटकारणानाम्, प्रत्युत एवं सामग्रीनिर्वचने घटसामग्री कदापि न सङ्घटेत, विभिन्नकालिकानां दण्डादीनां कदाप्येकत्र दुर्घटत्वात्।

अतः कारणसमुदायरूपा सामग्री नव्यन्यायरीत्यैवं परिभाषितव्या—यथा—धर्मविशिष्टसमुदायः सामग्री। वैशिष्ट्यं स्वविशिष्टरूपवृत्तित्वसम्बन्धेन। स्ववैशिष्ट्यं स्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकत्वव्यापकत्वस्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकत्वव्याप्यतोभयसम्बन्धेन। रूपवृत्तित्वं स्वघटकतावच्छेदत्वव्यापकत्व स्वघटकतावच्छेदकत्वव्याप्यत्वोभयसम्बन्धेन।

घटस्यैकैककारणसमुदायः घटत्वविशिष्टः, यतस्तत् स्वावच्छिन्नकार्यताद्युभयसम्बन्धेन स्वविशिष्टदण्डत्वादिगतसमुदायत्वे विद्यते तत्रोक्तसमुदायस्य स्वघटकताद्युभयसम्बन्धेन वृत्तित्वात्। स्वावच्छिन्नकार्यतादिसम्बन्धयोः प्रथमस्य त्यागो न कर्तुं शक्यः दण्डचक्रचीवराणां त्रयाणामपि सामग्रीत्वापत्तेः, द्वितीयः सम्बन्धोऽपि त्यक्तुमशक्यः दण्डचक्रादिसमस्तकारणैः घटाकारणतन्तुप्रभृतिभिः घटितस्य समुदायस्यापि सामग्रीत्वापत्तेः।

स्वघटकतादिसम्बन्धयोः दण्डचक्रादिघटकार्यकारणघटाकारणतन्त्वादि-समुदायस्यापि घटसामग्रीत्वापत्त्या प्रथमः सम्बन्धस्त्यक्तुमनर्हः। द्वितीयः सम्बन्धोऽपि नोपेक्षितुं शक्यः दण्डचक्रचीवरमात्राणामपि समुदायस्य सामग्रीत्वापातात्।

प्रश्नो जायते यदुक्तरीत्या सामग्र्या निर्वचने दण्डद्वयचक्रद्वयादिसमुदायस्यापि घटसामग्रीत्वं वारयितुं न शक्यते। [अतस्तद्वारणाय रूपवृत्तितानियामकसम्बन्धतया स्वाश्रयद्ववृत्तित्वसम्बन्धेन स्वघटकतावच्छेदकविशिष्टान्यत्वमपि निवेश्यम्।?] अतस्तद्वारणाय रूपवृत्तितानियामकसम्बन्धेषु स्वघटकतावच्छेदकताविशिष्टान्यत्वं प्रवेश्यम्, वैशिष्ट्यं स्वाश्रयाश्रयद्वयवृत्तित्वसम्बन्धेन, एवञ्च नोक्तदोषः। यत उक्तसमुदायस्यायं सम्बन्धो दण्डत्वचक्रत्वादौ विद्यमाने समुदायत्वे नास्ति। अस्य समुदायत्वस्य उक्तसमुदायस्य दण्डत्वनिष्ठघटकतावच्छेदकताया आश्रयदण्डत्वस्याश्रयद्वये-दण्डद्वये वृत्तित्वेन स्वाश्रयाश्रयद्वयवृत्तित्वसम्बन्धेन दण्डत्वनिष्ठघटकतावच्छेदकता विशिष्टान्यत्वाभावात्।

पुनः प्रश्नो जायते यदुक्तरीत्या रूपवृत्तितानियामकतया उक्तस्तृतीयसम्बन्धो निवेश्यते तदा एकैकदण्डचक्रादिभिः कपालद्वयेन च घटितस्य समुदायस्यापि सामग्रीत्वानुपपत्तिः, दण्डत्व, चक्रत्व कपालत्वादिषु विद्यमाने समुदायत्वे उक्तसमुदायस्य कपालत्वनिष्ठघटकतावच्छेदकतावैशिष्ट्येन कपालत्वनिष्ठघटकतावच्छेदकताश्रयकपालत्वस्याश्रये कपालद्वये वृत्तितया स्वाश्रयाश्रयद्वयवृत्तित्वसम्बन्धेन उक्तसमुदायस्य घटकतावच्छेदकताविशिष्टान्यत्वाभावेन घटकारणसमुदायस्य स्वघटकतादिसम्बन्धद्वयेन उक्तेन तृतीयसम्बन्धेन च दण्डत्वचक्रत्वकपालत्वादिषु विद्यमाने समुदायत्वे वृत्तित्वाभावात्। तृतीयसम्बन्धे स्वघटकतावच्छेदकतायां समवायिकारणतावच्छेदकावृत्तित्वनिवेशेनापि नायं दोषो वारयितुं शक्यः, दण्डत्वस्यापि स्वगतरूपसमवायकारणतावच्छेदकत्वेन दण्डत्वे विद्यमानघटकतावच्छेदकताया अपि समवायिकारणतावच्छेदकावृत्तित्वाभावात्।

यद्येवमुच्येत यत् स्वप्रयोज्योत्पत्तिककार्यसमवायिकारतावच्छेदकावृत्तित्वनिवेशनैष दोषो वारायितुं शक्यः। यतो दण्डचक्रादीनां समुदायरूपा सामग्री घटोत्पत्तिप्रयोजिका, तत्प्रयोज्योत्पत्तिककार्यं घटः, तत्समवायिकारणतावच्छेदकं न दण्डत्वादि, किन्तु कपालत्वम्। अत उक्तविशेषणस्य

प्रवेशे दण्डत्वादौ विद्यमाना स्वघटकतावच्छेदकतैव ग्रहीतुं शक्या, न तु कपालत्वनिष्ठस्वघटकतावच्छेदकतापि। तदेतत्कथनेऽपि सामग्रीपरिभाषा निर्दोषा न भवितुर्महति। कपालिकारूपात्मकासमवायिकारण, कपालात्मक-समवायिकारण, कपालरूपप्रागभावात्मकनिमित्तकारणैः घटिताया कपाल-रूपसामग्र्या एककपालघटितत्वेन कपालद्वयघटिते कपालरूपस्य कारण-समुदाये सामग्रीत्वापत्तेः, कपालत्वस्य समवायिकारणतावच्छेदकतया स्वप्रयोज्योत्पत्तिककार्यसमवायिकारणतावच्छेदकावृत्तिस्वघटकतावच्छेदक-तायाः कपालत्वनिष्ठघटकतावच्छेदकताभिन्नत्वात्। कपालरूपप्रागभावत्व-निष्ठघटकतावच्छेदकतायास्तथात्वेन स्वाश्रयाश्रयद्वयवृत्तित्वसम्बन्धेन कपाल-द्वयघटिते कपालरूपस्य कारणसमुदाये वृत्तिसमुदायत्वस्य तद्विशिष्टान्यतया उक्तसमुदाये सामग्रीत्वापत्तेरपरिहार्यत्वात्।

एतद्दोषपरिहाराय तृतीयसम्बन्धे स्वघटकतावच्छेदकतायां स्वप्रयोज्यो-त्पत्तिककार्यसमवायिकारणताविशिष्टधर्मावृत्तित्वं प्रदेयम्, वैशिष्टयं स्वा-वच्छेदकत्वस्वनिरूपितकार्यत्वाश्रयनिरूपितसहकारितावच्छेदकत्वैतदुभयसम्ब-न्धेन। एवमुक्तौ कपालद्वयेन घटितः दण्डचक्रादि समुदायः घटसामग्री भविष्यति। यतो घटोत्पत्तौ एकः कपालः अन्यस्य कपालस्य सहकारी, अतः कपालत्वं स्वप्रयोज्योत्पत्तिककार्यस्य घटस्य समवायिकारणतया उक्तोभय-सम्बन्धाभ्यां विशिष्टो भविष्यति। अतस्तत्र विद्यमानस्वघटकतावच्छेद-कताभिन्ना दण्डत्वादौ विद्यमाना धटकतावच्छेदकता ग्रहीतुं एक्यते। तद्विशिष्टान्यत्वस्य कपालद्वयदण्डचक्रादिसमुदायवृत्तिसमुदायत्वे विद्यमानतया उक्तसमुदायस्य स्वविशिष्टरूपवृत्तित्वसम्बन्धेन धर्मविशिष्टसमुदायत्वात्। कपालद्वयेन घटितः कपालरूपकारणानां समुदायः कपालरूपत्वधर्मेण विशिष्टो न भविष्यति। यद्उक्तसमुदायवृत्तिसमुदायत्वे समुदायस्य वृत्तितानियामक-स्तृतीयसम्बन्धो नास्ति; कपालरूपस्यैकैककपाले पार्थक्येनानुत्पद्यमानतया एक-कपालरूपोत्पत्तौ अन्यकपालरूपस्य सहकारित्वाभावेन, उक्तसमुदायादुत्पद्य-मानकपालरूपस्य समवायिकारणताविशिष्टत्वस्य कपालत्वेऽभावात्। तस्मिन् समवायिकारणतायाः स्वावच्छेदकत्वसम्बन्धसत्त्वेऽपि स्वनिरूपितकार्यत्वाश्रय-कपालरूपसहकारितावच्छेदकत्वरूपस्य द्वितीयसम्बन्धस्यासत्त्वात्। अतः स्वप्रयोज्योत्पत्तिककपालरूपात्मकार्यसमवायिकारणताविशिष्टधर्मावृत्तिस्वघट-कतावच्छेदकेतात्वेन कपालत्वनिष्ठा घटकतावच्छेदकता भविष्यति। तदाश्रय-कपालत्वस्याश्रये कपालद्वये वृत्तित्वेन कपालद्वयघटितोक्तसमुदायवृत्तिसमुदा-

यत्वे तृतीयसम्बन्धस्याभावेन उक्तसमुदायस्य स्वविशिष्टरूपवृत्तित्वसम्बन्धेन धर्मविशिष्टसमुदायत्वाभावात् ।

प्रश्नः जायते यत् तथोक्तौ एककपालेन घटितः कपालरूपस्य कारणसमुदायोऽपि सामग्री न भविष्यति, यतः समुदाये स्वविशिष्टरूपवृत्तितानियामकसम्बन्धेषु तृतीयसम्बन्धस्याप्रसिद्धत्वात् । कपालरूपस्य समवायिकारणतावच्छेदककपालत्वे कपालरूपस्य सहकारितावच्छेदकताभावेनोक्तसम्बन्धाभ्यां स्वप्रयोज्योत्पत्तिककार्यस्य कपालरूपस्य समवायिकारणताविशिष्टत्वाभावात् । एतदुत्तरे इदं वक्तुं शक्यते यत्तृतीयसम्बन्धस्य स्वविशिष्टवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वोत्पत्तिकप्रयोजककार्यसमवायिकारणत्वाभाववत्त्वरूपे परिवर्तनेन इयमापत्तिः परिहृता भवितुमर्हति । अस्य सम्बन्धस्य कपालरूपसमवायिकारणतायाः व्यधिकरणसम्बन्धतया एतत्सम्बन्धावच्छिन्नप्रतियोगिताकस्य तदभावस्य सामग्रीरूपेऽभिमतायां कपालत्वनिष्ठघटकतावच्छेदकतायां सम्भवात् ।

पुनः प्रश्नो भवति यत् एककपालेन घटितस्य कपालरूपकारणसमुदायमध्ये कपालिकायाः रूपद्वयमपि प्रविशति, अत एतत्समुदायवृत्तिरूपे समुदायस्य वृत्तितानियामकस्तृतीयसम्बन्धो न स्थास्यति । यतः रूपत्वनिष्ठ स्वघटकतावच्छेदकता स्वप्रयोज्योत्पत्तिककार्यसमवायिकारणताविशिष्टधर्मेऽवृत्तितया ग्रहीतुं शक्यते । उक्तसमुदायवृत्तिसमुदायत्वञ्च तदाश्रयायश्रयरूपद्वयवृत्तितया उक्तस्वघटकतावच्छेदकताविशिष्टान्यत्वाभावेनोक्तसमुदायः स्वविशिष्टरूपवृत्तित्वसम्बन्धेन धर्मविशिष्टसमुदायो न भविष्यति । एतदुत्तरमिदमस्ति यत्तृतीयसम्बन्धे स्वघटकतावच्छेदकतायां स्वप्रयोज्योत्पत्तिककार्यनिरूपितासमवायिकारणतावच्छेदकावृत्तित्वस्यापि निवेशेन एतद्दोषासम्भवात् ।

तदेवं सामग्रीलक्षणमित्त्थं पर्यवस्यति धर्मविशिष्टः समुदायः सामग्री। धर्मवैशिष्ट्यं स्वविशिष्टरूपवृत्तित्वसम्बन्धेन । स्ववैशिष्ट्यं स्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकत्वव्यापकत्व, स्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकत्वव्याप्यत्वोभयसम्बन्धेन, रूपवृत्तित्वं समुदाये स्वघटकतावच्छेदकत्वव्यापकत्व, स्वघटकतावच्छेदकत्वव्याप्यत्व, स्वाश्रयाश्रयद्वयवृत्तित्वसम्बन्धेन स्वघटकतावच्छेदकताविशिष्टान्यत्वैतत्त्रितयसम्बन्धेन, तृतीयसम्बन्धे स्वविशिष्टघटकतावच्छेदकता च स्वप्रयोज्योत्पत्तिककार्यसमवायिकारणत्वाभाववती,

**सांसिद्धिकं द्रवत्वं सलिले नैमित्तिकं घृतादिकनकादौ ।**
**स्नेहः पिण्डीभावे हेतुः सलिलादिवर्ती सः ।। ३५ ।।**

द्रवत्व सांसिद्धिक तथा नैमित्तिक ऐसे दो प्रकार का है। सांसिद्धिक जल में है और घृत-सुवर्णादि में नैमित्तिक है ।। ३५ ।।

द्रवत्वं द्विविधं सांसिद्धिकं नैमित्तिकं च। सांसिद्धिकं जले नैमित्तिकं घृतादौ पृथिव्यां सुवर्णादौ तेजसि च। सुवर्णादेस्तैजसत्वं मन्वादिस्मृतौ प्रसिद्धम्। एतद्भेदसूचनार्थमेवादिपदद्वयम् ।। ३५ ।।

**एकत्वादिः संख्या नित्याऽनित्या यथाश्रयं प्रथमा ।**
**द्वित्वादिरपेक्षाधीजन्याऽनित्यैव सर्वत्र ।। ३६ ।।**

एकत्वादि परार्ध पर्यन्त संख्या है। नित्य गगनादिगत एकत्व नित्य है। घटादिगत अनित्य है। द्वित्वादि अपेक्षाबुद्धि जन्य होने से सर्वत्र अनित्य ही है ।। ३६ ।।

गणनासाधारणकारणं संख्या एकत्वादिपरार्धपर्यन्ता। आश्रयानुसारेणैकत्वस्य नित्यत्वानित्यत्वव्यवस्था। अपेक्षाबुद्धिजन्यत्वाद् द्वित्वादिकं सर्वत्रानित्यमेव। अयमेकोऽयमेक इति द्वावित्यपेक्षाबुद्धिजत्वम् ।। ३६ ।।

**गुरुता त्वतीन्द्रियोक्ता पतने हेतुः क्षितौ जले चैषा ।**
**दैशिककालिकभेदात्परता द्वेधा ह्यपरता च ।। ३७ ।।**

पतनकारण गुरुत्व है वह अतीन्द्रिय है, पृथिवी और जल में रहता है। परत्व और अपरत्व दैशिक और कालिक भेद से दो-दो हैं ।। ३७ ।।

गुरुत्वमतीन्द्रियमुक्तम्। पतनेन तद्धेत्वनुमानगम्यम्। आद्यपतनासमवायिकारणमिति तल्लक्षणं च। एषा क्षितौ जले च वर्तते। परत्वं दैशिककालिकभेदाद् द्विविधम्। एवमपरत्वमपि द्विविधमेव ।। ३७ ।।

**यदपेक्षाबुद्धिभवा तेनानित्योभयी च परतादिः ।**
**मूर्तव्यवधानवशात् स्पन्दव्यवधानतश्चैव ।। ३८ ।।**

दोनों अपेक्षाबुद्धिजन्य हैं इसलिये अनित्य हैं। अधिक मूर्तपदार्थ व्यवधान हो तो परत्व ( दूर ) है। अल्प हो तो अपरत्व ( नजदीक ) है। स्पन्दरूपी क्षणों के

अधिक व्यवधान से कालिक परत्व ( ज्येष्ठत्व ) है और अल्प से कनिष्ठत्व है ।। ३८ ।।

यस्मादपेक्षाबुद्धिप्रभवे परत्वापरत्वे तेनोभयमनित्यमेव । बहुतर-मूर्तव्यवधाने परत्वमन्यथा त्वपरत्वम् । एवं बहुतरं स्पन्दात्मककालव्यव-धाने परत्वमन्यथा त्वपरत्वम् । विवक्षानुसारेण बहुत्वाल्पत्वे ।। ३८ ।।

**भेदात्पृथक् पृथक्त्वं शंखान् दध्मुः पृथक् पृथग्यद्वत् ।**
**सा चापेक्षाबुद्धिप्रभवा तस्मादनित्यैव ।। ३९ ।।**

पृथक्त्व गुण है, भेदरूपी अभाव से पृथक् है । शंखान् दध्मुः पृथक् पृथक् की जगह शंखान् दध्मुः भिन्नं भिन्नं ऐसा प्रयोग नहीं होता । यह भी अपेक्षाबुद्धिजन्य है और अनित्य है ।। ३९ ।।

पृथगितिव्यवहारकारणं पृथक्त्वम् । ननु भेद एव पृथक्त्वम् । न । शंखान् दध्मुः पृथक्पृथगित्यत्र शंखान् दध्मुर्भिन्नं भिन्नमित्यप्रयोगात् । अपेक्षा बुद्धिभवं पृथक्त्वं सर्वत्रानित्यम् ।। ३९ ।।

**परिमाणं त्वणुदीर्घह्रस्वमहद्भेदतश्चतुर्धोक्तम् ।**
**परिमाणजं घटादौ द्व्यणुके त्र्यणुके च संख्योत्थम् ।। ४० ।।**

परिमाण चार प्रकार का है—अणु, महत्, दीर्घ और ह्रस्व । घटादिपरिमाण कपालपरिमाणजन्य है । द्व्यणुकादि का परिमाण परमाणुगत द्वित्वादि संख्या से जन्य है ।। ४० ।।

मानव्यवहारासाधारणकारणं परिमाणम् । तच्चतुर्विधम् । अणु महद् दीर्घं ह्रस्वं चेति । कपालपरिमाणजन्यं घटपरिमाणम् । द्व्यणुके तु अणुगत-द्वित्वसंख्याजन्यम् । त्र्यणुके द्व्यणुकगतत्रित्वसंख्याजन्यम् । परिमाणानां स्वोत्कृष्टपरिमाणजनकत्वनियमान्महदुत्पन्नस्य महत्तरत्ववदणुजन्यस्याणु-तरत्वप्रसङ्गात् ।। ४० ।।

**संयोगः कर्मभवः संयोगभवश्च कविभिराख्यातः ।**
**तुल्यो विभाग उक्तः कर्मजनिविभागजनिभेदात् ।। ४१ ।।**

संयोग कर्मजन्य है । संयोगजन्य संयोग को भी विद्वान लोग मानते हैं । ऐसा ही विभाग भी कर्मजन्य और विभागजन्य ऐसे दो प्रकार है ।। ४१ ।।

अप्राप्तयोः प्राप्तिः संयोगः। स कर्मभवः संयोगभवश्चेति द्विविधः। एवं विभागोऽपि। तत्र हस्तपुस्तकसंयोगात्कायपुस्तकसंयोग इत्युदाहरणम्। तच्चिन्त्यम्। हस्तस्यापि सावयवत्वादङ्गुल्यादिसंयोगजस्तत्संयोग इति क्रमेण परमाणुसंयोगजो द्व्यणुकसंयोग इति यत्रोत्पन्नद्वितीयचतुर्थादिक्षणे वस्तुसंयोगस्तृतीयचतुर्थादिक्षणे नाशस्तत्र चरमावयविसंयोग एव न स्यात्। अवयवसंयोगक्षणेऽवयव्याप्तावयविसंयोगः कस्मान्न भवतीति च वक्तव्यम्। वस्तुतस्तु यत्र शततन्तुकपटेन पूर्वमेव हस्तसंयोगः पुनरेकतन्तुयोजनेनैकशतन्तुकपटे विनैव क्रियां हस्तसंयोगः संयोगजसंयोगोदाहरणं बोध्यम्। एवं विभागोऽपि॥ संयोगनाशको गुणो विभाग इति लक्षणम्॥ ४१॥

॥ इति गुणनिरूपणम्॥

**उत्क्षेपोऽपक्षेपणमाकुञ्चनकं प्रसारणं गमनम्।**
**कर्माणि पञ्च तानि च संयोगविभागकारीणि॥ ४२॥**

उत्क्षेपण, अपक्षेपण, आकुञ्चन, प्रसारण और गमन ऐसे पांच कर्म होते हैं। संयोग और विभाग का असमवायिकारण कर्म है॥ ४२॥

उत्क्षेपणमूर्ध्वक्षेपः। अपक्षेपणमधःक्षेपः। आकुञ्चनं समवायीकरणम्। प्रसारणं विस्तारणम्। गमनं चेति पञ्च कर्माणि। संयोगविभागयोरसमवायिकारण कर्मेति कर्मसामान्यलक्षणम्॥ ४२।

**द्रव्यत्वं च गुणत्वं कर्मत्वं चेति जातयः प्रोक्ताः।**
**पृथिवीत्वादिस्तद्वत्तद्वत्त्वं लक्षणं सुगमम्॥ ४३॥**

द्रव्यत्व, गुणत्व और कर्मत्व ये तीन जातियाँ हैं। वैसे पृथिवीत्व जलत्वादि भी हैं। वे जाति ही द्रव्यादि का लक्षण है। द्रव्यत्वजातिमत् द्रव्यम्। गुणत्वजातिमान् गुणः। पृथिवीत्वजातिमती पृथिवी इत्यादि॥ ४३॥

द्रव्यत्वं तद्विशेषपृथिवीत्वादिकं च तथा गुणत्वं तद्विशेषगन्धत्वादिकं च तथा कर्मत्वं तद्विशेषोत्क्षेपणत्वादिकं च पृथक् पृथक् जातयः। तथा च द्रव्यत्वाभिसम्बन्धाद् द्रव्यम्। गुणत्वाभिसम्बन्धाद् गुणः। कर्मत्वाभिसम्बन्धात्कर्म। पृथिवीत्वाभिसम्बन्धात् पृथिवी। गन्धत्वाभिसम्बन्धाद् गन्धः। उत्क्षेपणत्वाभिसम्बन्धादुत्क्षेपणमित्येवं सुगमं लक्षणं सर्वत्र ज्ञेयम्। तथैव भाष्याकारा लक्षणान्यभिदधुः। तत्र कार्यसमवायिकारणतावच्छेद-

कतया संयोगस्य विभागस्य वा समवायिकारणतावच्छेदकतया द्रव्यत्व-जातिसिद्धिः। संयोगविभागान्यासमवायिकारणतावच्छेदकतया प्रत्यक्षेण वा गुणत्वजातिसिद्धिः। आम्रादौ कर्मादिविलक्षणतया रूपरसगन्धादीनामनुगतप्रतीतिदर्शनात्। गुण इति धर्म इति प्रकार इति च यान् लोका आचक्षते। संयोगस्य विभागस्य वाऽसमवायिकारणतावच्छेदकतया कर्मत्व-जातिसिद्धिः प्रत्यक्षेण वा ॥ ४३ ॥

**इति कर्मनिरूपणम्।**

**सामान्यं जात्यभिधं परमपरं चेत्युदाहृतं द्विविधम्।**
**अनुवृत्तिधीनिदानं नित्यमनेकेषु समवेतम् ॥ ४४ ॥**

सामान्य जाति को ही कहते हैं। वह पर और अपर ऐसे दो है। अनुवृत्त बुद्धि का वह कारण हैं। वह नित्य है। अनेक समवेत है ॥ ४४ ॥

नित्यत्वे सत्यनेकसमवेतत्वं सामान्यलक्षणम्। अयं घटः अयं घट इत्याद्यनुवृत्तिधीहेतुः। सैव जातिः। सा परापरभेदाद् द्विधा। परा सत्ता द्रव्यगुणकर्मसु। अपरा द्रव्यत्वादिः ॥ ४४ ॥

**इति सामान्यनिरूपणम्।**

**व्यावर्तका विशेषा नित्यद्रव्यस्थितास्तु पृथगन्त्याः।**
**सम्बन्धो नित्यो यो गुणगुण्यादेः स समवायः ॥ ४५ ॥**

विशेष पदार्थ नित्यद्रव्यस्थित हैं। अन्तिम व्यावर्तक हैं। गुण और गुणी आदि का नित्यसम्बन्ध समवाय है ॥ ४५ ॥

विशेषत्वं व्यावर्तकत्वमेव। तत्र घटपटयोर्घटत्वपटत्वे विशेषौ। तदवयवा वा। न पृथक्। परमाणुगगनादिनित्यद्रव्यव्यावर्तकास्तु पृथगेव। तेऽन्त्याः। यदपेक्षया विशेषो नास्ति। अयुतसिद्धवृत्तेर्गुणगुण्यादेर्यो नित्यः सम्बन्धः स समवायः ॥ ४५ ॥

**इति विशेषसमवाययोर्निरूपणम्।**

**द्विविधोऽभावः संसर्गान्योन्याभावभेदतः प्रोक्तः।**
**प्रागत्यन्ताभावौ ध्वंसश्चेत्यादिमस्त्रिविधः ॥ ४६ ॥**

अभाव दो प्रकार का है। संसर्गाभाव और अन्योन्याभाव। संसर्गाभाव के तीन भेद हैं—प्रागभाव अत्यन्ताभाव और ध्वंसाभाव ॥ ४६ ॥

अभावं निरूपयति द्विविध इति। भावभिन्नत्वमभावत्वम्। भेदत्वमखण्डोपाधिः। अभावत्वमेव वाऽखण्डोपाधिः। तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वे सत्यभावत्वं भेदत्वम्। अनादिसान्ताभावत्वं प्रागभावत्वम्। साद्यनन्ताभावत्वं ध्वसत्वम्। संसर्गावच्छिन्नप्रतियोगिकाभावत्वमत्यन्ताभावत्वम्। संसर्गस्तादात्म्यभिन्नः ॥ ४६ ॥

इत्यभावनिरूपणम्

इति प्रथमं सप्तपदार्थनिरूपणप्रकरणम्।

—०—

## अथ नव्यन्यायपदार्थनिरूपणम्

**यदभावः प्रतियोगी स भवेत्प्रतियोगिता च तत्रैव।**
**अनुयोगी चाभावो भवति च तत्रानुयोगित्वम् ॥ ४७ ॥**

जिसका अभाव हो वह प्रतियोगी है जैसे घटाभाव का प्रतियोगी घट है। उसी घटादि में प्रतियोगिता रहती है। अभाव अनुयोगी होता है, उसमें अनुयोगिता रहती है ॥ ४७ ॥

एवं वैशेषिकप्रसिद्धान् पदार्थान्निरूप्य नव्यनैयायिकविचारितांस्तान् निरूपयति-यदभाव इति। यस्याभावः स प्रतियोगी। यथा घटो नास्तीति प्रतीतौ घटस्याभावो भासते। स घटः प्रतियोगीत्युच्यते। तत्रैव घटे प्रतियोगिता नाम धर्मः। तं स्वरूपसम्बन्धविशेषमेके वदन्ति। एवमुत्तरत्रापि। अनुयोगी तु तत्राभावो भवति। तस्मिन् घटाभावे चानुयोगित्वं धर्मः स्वरूपसम्बन्धविशेषो वा। शक्तिपदार्थविचारावसरप्रदर्शितशक्तिविशेषो वा सर्वत्र। ननु प्रतियोगित्वमेकमेव घटे स्वीकर्तव्यं न त्वभावेऽनुयोगित्वमपि। न च तदा प्रतियोगित्वस्याभावे विरहेण सम्बन्धत्वानुपपत्तिरिति वाच्यम्। वक्ष्यमाणं निरूपकत्वमादाय संसृष्टत्वोपपत्तेः। प्रतियोगितानिरूपको ह्यभावः। न च घटतदभावयोः प्रतियोगित्वं संसर्ग इति तस्यानुयोगित्वमभावे दुर्वारमिति वाच्यम्। तथा सति प्रतियोगित्वरूपसंसर्गस्यानुयोगित्ववत्पृथगेव प्रतियोगित्वमपरं स्यात्। संसर्गीयानुयोगित्वतोऽस्यानुयोगित्वस्य भेदस्वीकाराच्चेति चेन्न। अभावेऽनुयोगित्वमस्तु तन्निरूपकत्वं

घटादावस्त्विति वक्तुं शक्यत्वाद्विनिगमनाविरहादुभयसिद्धेः। न च घटप्रतियोगिकोऽभाव इतिवद् अभावानुयोगिको घट इति व्यवहार-विरहादभावे नानुयोगित्वसिद्धिरिति वाच्यम्। घटप्रतियोगिकोऽभाव इत्यादेः शास्त्रकारीयपारिभाषिकव्यवहारमात्रत्वात्। लोकास्तु घटो नास्तीत्येव प्रयुञ्जते। किं च घटसापेक्षोऽभाव इति घटप्रतियोगिकोऽभाव इति व्यवहारो युक्तः। न पुनरभावसापेक्षो घट इत्यभावानुयोगिको घट इति न व्यवहारः। न च प्रतियोगित्वादेः शक्तिविशेषरूपत्वेऽभावे भावात्मकशक्तिर्न स्यादिति नानुयोगित्वमभावस्येति वाच्यम्। निरूपकत्वमेवानुयोगित्वमिति मतेऽपि निरूपकत्वस्य शक्तिविशेषरूपत्वात्तन्मतेऽपि अभावे तत्स्थितेश्चिन्तनीयत्वात्। घटाभावो नास्तीत्यत्राभावे प्रतियोगित्वस्याप्युपपादनीयत्वात्। तत्तदधिकरणगतसामयिकशक्तेरेव तदाश्रिताभावे भानोपगमेऽनुयोगित्वभानमपि निराबाधमेव ॥ ४७ ॥

**प्रतियोगितात्वमत्राखण्डमभावानुयोगितात्वं च।**
**ताभ्यां च व्यावृत्ते प्रतियोगित्वानुयोगित्वे ॥ ४८ ॥**

प्रतियोगिता में प्रतियोगितात्व एक अखण्ड धर्म है। तथा अभावगत अनुयोगिता में अनुयोगितात्व भी अखण्ड धर्म है ॥ ४८ ॥

अत्र प्रतियोगितायां प्रतियोगितात्वमखण्डो धर्मः। तथाऽभावानुयोगितायां यदनुयोगितात्वं तदप्यखण्डो धर्मः। ताभ्यां प्रतियोगितात्वानुयोगितात्वाभ्यां प्रतियोगित्वानुयोगित्वे व्यावृत्ते भवतः। अयं भावः। घटस्याभाव इत्यादौ घटतदभावयोः सम्बन्धः कश्चित्प्रतीयते। तच्च न सम्बन्धसामान्यम्। घटवत्यपि पटाद्यभावसत्त्वेन घटादेर्यथाकथञ्चित्सम्बन्धेनाभावसम्बद्धत्वाद् 'अत्र घटो नास्ती'ति प्रत्ययस्य प्रमात्वापत्तेः। अतः सम्बन्धविशेष एव यथोक्तप्रतीतिविषयः। स च प्रतियोग्यनुयोगिभावाख्यः। तत्र प्रतियोगित्वं घटेऽनुयोगित्वमभावे। ते च प्रतियोग्यनुयोगिभ्यां भिन्ने वा तद्रूपे वा सर्वथापि निरूपकत्वविषयत्वादितो व्यावर्तनीये। तदर्थं तत्र प्रतियोगितात्वादिरखण्डो धर्मो व्यावर्तकोऽभ्युपगन्तव्यः। न च प्रतियोगित्वविषयत्वादिरेवाखण्डं पदार्थान्तरमस्त्विति वाच्यम्। प्रतियोगित्वादीनां नानात्वस्यावश्यंभावात्। एकत्वे घटाभाववति भूतले द्रव्यं नास्तीति प्रत्ययापत्तेः। द्रव्यत्वसमानाधिकरणघटनिष्ठप्रतियोगिताकाभावस्य तत्र सत्त्वात्। न च घटाभावद्रव्याभावयोर्भिन्नत्वाद् द्रव्यवति भूतले घटाभाव-

सत्त्वेऽपि तदीयप्रतियोगितायां द्रव्याभावनिरूपकत्ववैशिष्ट्यविरहान्न दोष इति वाच्यम्। निरूपकतानां वा नानात्वं प्रतियोगितानां वेति विनिगमयितुमशक्यत्वात्। अनुयोगिनः संसर्गघटकत्वापत्तेश्च। द्रव्याभावीयनिरूपकत्व-घटाभावीयनिरूपकत्वयोरेकस्यामेव प्रतियोगितायां स्थितौ तद्वैशिष्ट्येन व्यावृत्त्यसंभवाच्च। अत एव नव्याः समवायस्यापि नानात्वमूरीचक्रुः। तस्माद् द्रव्यत्वावच्छिन्ना प्रतियोगिता पृथगेव। घटत्वावच्छिन्ना च सा पृथगेव। तत्तद्व्यक्तित्वावच्छिन्ना च पृथगेव। तथा च तासामनुगमक इतरव्यावर्तकश्च धर्मो वक्तव्यः। न हि द्रव्यत्वाद्यवच्छिन्नत्वेनेतरव्यावृत्तिः। द्रव्यत्वाद्यवच्छिन्नाधेयत्वविषयत्वादेरपि सत्त्वात्। अतः प्रतियोगितात्वादिरेवाखण्डो धर्मस्तथाविधो वाच्यः। द्रव्यत्वघटत्वाद्यवच्छिन्नत्वेन प्रतियोगित्वानां परस्परव्यावृत्तिः। अखण्डोपाधित्वं चासमवेतत्वे सति स्वतो व्यावृत्तत्वम्। सामान्यविशेषयोरतिव्याप्तिवारणाय प्रथमदलम्। शब्दाश्रयत्वाद्यात्मकगगनत्वादेरखण्डोपाधित्ववारणाय द्वितीयदलम्। शब्दाश्रयत्वं च शब्दनिरूपकत्वाश्रयतात्वाभ्यां व्यावृत्तम्। न तु स्वत इति नातिव्याप्तिः। अधिकमग्रे वक्ष्यते। एवं च प्रतियोगितात्वादिमत्त्वमेव प्रतियोगित्वादीनां लक्षणम्। न च लक्ष्यतावच्छेदकलक्षणयोरैक्यापत्तिः। "पृथिवीत्वभिसम्बन्धात्पृथिवी"त्येवं प्रशस्तपादैर्लक्षणोक्तेस्तद्वदेवात्रापि समाधेयत्वात् ॥ ४८ ॥

**यत्संसर्गो यत्र प्रतियोग्यनुयोगिनौ च भवतस्तौ ।**
**संसर्गीयं तत्राखण्डं प्रतियोगितात्वादि ।। ४९ ।।**

जिसका संसर्ग जहां हो वे भी प्रतियोगी और अनुयोगी होते हैं। जैसे भूतल में घट संयोग है तो उस संयोग का प्रतियोगी घट और अनुयोगी भूतल है। यहाँ प्रतियोगितात्व और अनुयोगितात्व पूर्वोक्त से अलग अखण्ड दो धर्म हैं ।। ४९ ।।

अभावीयप्रतियोगित्वादिव्यतिरिक्तं संसर्गीयप्रतियोगित्वादिकमाह—यत्संसर्ग इति। यत्संसर्गो यत्र प्रमितिविषयीक्रियते यथा वह्नेः संयोगः पर्वते इति तत्र वह्निः प्रतियोगी अनुयोगी च पर्वतः। तत्र षष्ठीप्रयोज्यविषयताश्रयाखण्डधर्मवती प्रतियोगिता। सप्तमीप्रयोज्यविषयताश्रयाखण्डधर्मवती अनुयोगिता। न च समवाय एव तत्र षष्ठ्याद्यर्थ इति वाच्यम्। वह्निमान् पर्वत इतिवत् पर्वतवान् वह्निरिति प्रत्ययापत्तेः। न च मतुपोऽधिकरणार्थकत्वान्न दोष इति वाच्यम्। सम्बन्धमात्रेऽपि मतुबादेर्विधानात्। तदस्यास्त्य-

स्मिन्निति मतुबि'' त्यनुशासनात् गुणवद् द्रव्यं, गुणस्य समवायो द्रव्ये इत्यादौ सम्बन्धान्तरविरहाच्च। एषा च प्रतियोगिताऽभावीयप्रतियोगितातो भिन्ना। अन्यथा घटाभाववति भूतले घटाभावीयां घटनिष्ठप्रतियोगितामादाय संयोगीयायास्तदभिन्नत्वेन घटवद् भूतलमिति प्रत्ययापत्तेः। न च संयोगीयत्वाभावीयत्वाभ्यामेव प्रतियोगित्वभेदो न तु विजातीया प्रतियोगितेति पृथगखण्डप्रतियोगितात्वादि न मन्तव्यमिति वाच्यम्। नष्टो घट इत्यादौ नाशानुयोगित्वमेव संसर्गीयम्। अभावीयं पुनर्नाशप्रतियोगित्वमेव घटे इति वैषम्यस्य पार्थक्यं विनानुपपत्तेः। संसर्गीयप्रतियोगिता वैशिष्ट्यप्रत्ययहेतुः। अभावीयप्रतियोगिता त्ववैशिष्ट्यप्रत्यहेतुरित्यत्यन्तवैलक्षण्याच्च। इत्थं चोद्देशग्रन्थे शब्दैक्येनैकीकृत्याभिधानं न तु वस्तुत ऐक्यमिति द्रष्टव्यम् ॥ ४९ ॥

**नित्यं यत्साकाङ्क्षं प्रतियोगित्वादिकं भवति तद्धि ।**
**भवति निरूपकमेवं प्रतियोगित्वादि च निरूप्यम् ॥ ५० ॥**

प्रतियोगित्व अवच्छेदकत्व आदि जिसकी नियमतः आकाङ्क्षा रखते हैं वह निरूपक तथा प्रतियोगित्वादि निरूप्य ( निरूपित ) होते हैं। घट किसका प्रतियोगी यह नित्य आकाङ्क्षा है। अतः अभाव उसका निरूपक है। प्रतियोगिता निरूपित है। दोनों परस्पर साकाङ्क्षा हो तो दोनों परस्पर निरूपक और निरूपित होंगे जैसे प्रतियोगितानिरूपितानुयोगिता और अनुयोगितानिरूपितप्रतियोगिता इत्यादि ॥ ५० ॥

नित्यं नियतं यत्साकाङ्क्षं प्रतियोगित्वादिकम्। आदिनाऽऽधारत्वाधिकरणत्वादिकं सर्वं ग्राह्यम्। घटः प्रतियोगीत्युक्ते कस्य प्रतियोगीति नित्यमाकाङ्क्षा भवति। अभावस्य प्रतियोगीत्युत्तरम्। तथा चाभावो निरूपकः। प्रतियोगिता च निरूप्येति वा निरूपितेति वोच्यते। घटनिष्ठप्रतियोगितानिरूपकोऽभावः। अभावनिरूपिता प्रतियोगिता। न च प्रतियोगितेत्युक्ते कुत्र प्रतियोगितेत्याकाङ्क्षादर्शनाद् घटे प्रतियोगितेति समाधानदर्शनाच्च घटस्यापि प्रतियोगितानिरूपकत्वं स्यादिति वाच्यम्। तदाकाङ्क्षाया नित्यत्वविरहात्। पितेति शब्दं श्रुत्वा कस्य पितेत्याकाङ्क्षा नियमतो भवति न तु कुत्र पितेति। तथा चोक्तं वाचस्पतिमिश्रैः—''नहि चन्द्रमसमादित्यं वोपलभ्य कस्यायमिति सम्बन्ध्यन्वेषणा। भवति तु

ज्ञानमित्युक्ते विषयान्वेषणा किंविषयमिति'' इति । एतदुक्तं भवति-यत्स्वरूपबोधनार्था यदाकाङ्क्षा नियता तन्निरूपकमिति । पितृत्वस्वरूपज्ञानार्थं नाधिकरणाङ्क्षा । किन्तु पुत्राकाङ्क्षैव । अधिकरणाद्याङ्क्षा पाश्चात्याऽनियता । एवं प्रतियोगितादिस्वरूज्ञानार्थत्वादभावाकाङ्क्षायाः स निरूपकः । तत्र सिद्धघटादिकं निरूपकमेव । भूतलनिष्ठाधिकरणतानिरूपक एव घटो न तु तन्निरूपितः । आधेयत्वाधिकरणत्वादिकं तु परस्परनिरूप्यनिरूपकभावापन्नम् । घटनिष्ठाधेयतानिरूपिता भूतलनिष्ठाधिकरणता । भूतलनिष्ठाधिकरणतानिरूपिता च घटनिष्ठाधेयतेति । इदं तु बोध्यम् । घटो नास्तीत्यादावभावनिरूपिता प्रतियोगिता घटे । तन्निरूपिता तन्निरूपिका वाऽवच्छेदकता वक्ष्यमाणलक्षणा घटत्वे । घटत्वनिष्ठावच्छेदकताया निरूपकं तन्निरूप्यं वा प्रतियोगित्वम् । घटस्तु नावच्छेदकतानिरूपकः । वस्तुतस्तु अवच्छेदकतानिरूप्याऽवच्छेद्यतैव भवति । प्रतियोगिता तन्निरूपिका । क्वचित्तन्निरूपितत्वव्यवहारोऽवच्छेद्यताप्रतियोगित्वयोरेकत्वाभिप्रायेणेति वदन्ति ॥ ५० ॥

**अत्र निरूपकतात्वमखण्डमखण्डं निरूप्यतात्वं च ।**
**तेन व्यावृत्तं स्यान्निरूपकत्वं निरूप्यत्वम् ॥ ५१ ॥**

निरूपकता आदि में निरूपकतात्व और निरूप्यतात्व दोनों अखण्ड धर्म हैं । उनसे निरूपकता और निरूप्यता इतरव्यावृत्त हैं ॥ ५१ ॥

घटस्याधिकरणं देवदत्तस्य पुत्र इत्यादौ षष्ठीप्रयोज्यविषयताश्रयवृत्त्यखण्डधर्मवत्त्वं लक्षणमित्याशयेन निरूपकतात्वादेरखण्डधर्मत्वमाह—अत्रेति । न च घटस्याधिकरणमित्यादौ संयोग एव षष्ठ्यर्थ इति वाच्यम् । तथा सति घटस्य भूतलम्, अभावस्य घट इत्यादिप्रयोगापत्तेः । घटस्याधिकरणं भूतलमित्यादौ निरूपकत्वं षष्ठ्यर्थः । तस्याधिकरणपदार्थैकदेशेऽधिकरणत्वेऽन्वयः । न चैकदेशान्वयोऽव्युत्पन्न इति वाच्यम् । साकाङ्क्षस्थले एकदेशान्वयस्वीकारात् । देवदत्तस्य गुरुकुलमित्यादिप्रयोगात् । द्रव्यं निरूपयतीत्यादौ बोधानुकूलशब्दप्रयोगात्मकव्यापाररूपनिरूपणैकदेशे बोधे द्वितीयान्तद्रव्यशब्दार्थद्रव्यविषयकत्वान्वयस्यावश्याभ्युपेयत्वात् । तादृशनिरूपकताप्रतियोगिवृत्त्यखण्डधर्मवत्त्वं निरूप्यतालक्षणम् । निरूपकतात्वादितत्तदखण्डधर्मवत्त्वमेव वा सर्वत्र लक्षणम् ॥ ५१ ॥

**संसर्गस्य प्रतियोग्याधेयमथाधिकरणमनुयोगि ।**
**आधेयतात्वमाहुरखण्डमिहाधारतात्वमपि ॥ ५२ ॥**

संसर्ग का प्रतियोगी आधेय और अनुयोगी आधार ( अधिकरण ) है। आधेयतात्व और अधिकरणतात्व को कुछ लोग पृथक् अखण्डधर्म मानते हैं ॥ ५२ ॥

संसर्गस्येति । संशर्गीयप्रतियोगित्वमेवाधेयत्वं तथा संसर्गीयानुयोगित्वमधिकरणत्वमिति केषांचिन्मतम् । ननु मेषद्वयसंयोगे प्रतियोग्यनुयोगिनोराधाराधेयभावविरहादतिव्याप्तिः । न च मेषद्वयसंयोगादिव्यावृत्ततत्तत्संसर्गीयप्रतियोगित्वानुयोगित्वे आधेयत्वाधिकरणत्वे स्यातामिति वाच्यम् । रज्जुबद्धघटद्वये यथा एकघटोपर्यपरघटस्तदा तयोराधाराधेयभावः । तिर्यक् शायने मेषद्वयवत् स एव संयोगः । विपरीतस्थापने संयोगः स एव, किन्त्वाधाराधेयभाववैपरीत्यम् । तथा च तत्तत्संसर्गनिवेशेऽपि नास्त्येवोपपत्तिरिति चेन्न । अनुयोगित्वानवच्छिन्नप्रतियोगित्वमाधेयत्वम् । प्रतियोगित्वानवच्छिन्नानुयोगित्वमधिकरणत्वमिति विवक्षया दोषाभावात् । मेषद्वयसंयोयादौ युगपदेव प्रतियोगित्वानुयोगित्वे प्रत्येकस्मिन्निति न दोषः। समानसंसर्गीयानुयोगित्वाद्यनवच्छिन्नत्वं बोध्यम् । तेन यत्र घटत्रयमेकैकोपरि तत्र मध्यघटगतप्रतियोगित्वानुयोगित्वयोरूर्द्ध्वाधोघटीयानुयोगित्वप्रतियोगित्वाभ्यामवच्छिन्नत्वेऽपि नाधेयत्वाधारत्वयोरनुपपत्तिः । प्रतियोगित्वादिकं च दशाविशेषावस्थायि । न त्वभावीयप्रतियोगितावन्नित्यम् । तेन घटोपरि यत्र घटान्तरं तयोर्विपरिवर्त्य स्थापनादौ तेनैव संयोगेनाधेयत्वाधिकरणत्वयोर्विपरिवृत्तिरुपपद्यते । ननु समानसंसर्गीयानुयोगित्वाद्यनवच्छिन्नत्वं नाम स्वीयानुयोगित्वानवच्छिन्नस्वप्रतियोगित्वादिकं स्वत्वघटितमननुगतम् । किं च स्वीयानुयोगित्वानवच्छिन्नत्वाद्यननुसन्धानदशायामपि इदमाधेयमिदमधिकरणमित्यादि प्रतीतिर्जायते । तस्मादाधेयत्वादिकं पृथगेव प्रतियोगित्वादित इत्याशयवतां मतमाह—आधेयतात्वमाहुरिति । प्रतियोगितात्वादितः पृथगेवाधेयतात्वमधिकरणतात्वं चाखण्डधर्मद्वयम् । तादृशधर्मवत्त्वं चाधेयतादिलक्षणमिति भावः । अत्र मतेऽनुयोगित्वानवच्छिन्नप्रतियोगित्वसमनियतां कांचनाधेयतामादाय तद्व्यक्तिवृत्त्यखण्डोपाधिमत्त्वं लक्षणं शक्यं वक्तुमित्याशयेन पूर्वार्धं द्रष्टव्यम् ॥ ५२ ॥

**अन्यूनानतिरिक्तस्थितिमान् प्रतियोगितादितो यः स्यात् ।**
**सोऽवच्छेदकधर्मः प्रतियोगित्वाद्यवच्छेद्यम् ।।५३।।**

प्रतियोगिता अनुयोगिता आधेयता आदि के जो समनियत धर्म हैं वे अवच्छेदक कहलाते हैं । जैसे घट में प्रतियोगिता है । उसका समनियत धर्म घटत्व प्रतियोगितावच्छेदक है । प्रतियोगिता आदि अवच्छिन्न हैं ॥ ५३ ॥

अन्यूनेति । प्रतियोगित्वादिभ्योऽन्यूनानतिरिक्तदेशवृत्तिर्यो धर्मः सोऽवच्छेदक इत्युच्यते । यथा घटो नास्तीत्यभावप्रतियोगिता निखिलेषु घटेषु वर्तते । घटत्वमपि तथेति घटत्वं प्रतियोगिताया अवच्छेदकम् । न च तत्तद्घटनिष्ठा प्रतियोगिता भिन्नैव घटस्वरूपत्वादित्यतिरिक्तवृत्तित्वं घटत्वस्येति वाच्यम् । तदभावीयप्रतियोगितात्वेन प्रतियोगिताया ग्रहणात् । प्रतियोगितावच्छेदकरूपमेव प्रतियोगित्वमिति पक्षे शङ्कानवकाश एव । न च प्रतियोगिताया घटरूपत्वे घटवान् घट इतिवत्प्रतियोगितावान् घट इत्याधाराधेयभावो न स्यात् । घटत्वरूपत्वे स्वस्य स्वयममवच्छेदकं नोपपद्यत इति वाच्यम् । घटस्य घटत्वेन घटानधिकरणत्वेऽपि प्रतियोगितात्वेन तदधिकरणतासंभवात् । एवं प्रतियोगितात्वेन घटत्वेऽवच्छेदकं घटत्वमित्यपि युज्यते । यथा मीमांसकानां घटाभावस्य भूतलरूपत्वेऽपि नैयायिकानामपि अभावाधिकरणकाभावानामधिकरणरूपत्वेऽप्याधाराधेयभावप्रत्ययादिकं स्वीक्रियते । एवं पुनः स्वस्यापि स्वाश्रयत्वं रूपान्तरेणापद्येत । रूपाभावत्वेन रूपेण वायुश्चक्षुर्ग्राह्यो न तु वायुत्वेन रूपेणेत्यादिकमपि सुवचं स्यादित्यभावस्य पदार्थान्तरत्वं न स्यात् । एवं समवायस्याप्यतिरिक्तत्वं न स्यादिति बहुविप्लवापत्तेराधाराधेयभावप्रतीतिस्थाने वस्तुनः पार्थक्यमेव युक्तम् । अभावाधिकरणकाभावप्रतीतिर्लोकानां नास्ति । घटो नास्तीत्येवमेवाभावप्रत्ययात् । शास्त्रकृतां तत्प्रत्ययसत्त्वेऽपि क्वचिदनवस्थादिपरिहाराय तथोपगम्यते । तस्मात्प्रतियोगित्वादिकं पृथगेव तत्त्वमित्यपरे वदन्ति । तत्र घटाभावीयप्रतियोगिताऽनन्तघटनिष्ठाऽधिकरणभेदेन भिन्ना वा एका वा सर्वथापि नानाभावीयप्रतियोगिता नाना मन्तव्यैवेति प्रतियोगितात्वादिरखण्डधर्मः स्वीकर्तव्य एवेति द्रष्टव्यम् । सोऽयमवच्छेदक एव प्रतियोगित्वादिनियामक इति वक्ष्यते । तथा च प्रतियोगितानुयोगितानिरूपकतादिसर्वनियामकत्वात्प्रतियोगितावच्छेदकमनुयोगितावच्छेदकं निरूपकतावच्छेदकमिति सर्वत्रावच्छेदकधर्मा घटत्वादिर्द्रष्टव्यः । तत्र घटत्वादाववच्छेदकता

बोध्या। तेनावच्छेदकीभूतेन घटत्वादिनाऽवच्छिन्नं प्रतियोगित्वादीति तदवच्छेद्यमिति अवच्छिन्नमिति चोच्यते। प्रतियोगित्वादौ चावच्छेद्यत्वम्। प्रतियोगितादेरित्युक्तेः प्रतियोगितादेरेवावच्छेदकधर्मो न तु घटादेः। तस्य प्रत्यक्षादिनियतत्त्वेन नियामकस्यावच्छेदकस्यानुपयोगात्। एवं प्रतियोगित्वादिकमेवावच्छेद्यं न तु घटादि। यत्रापि 'प्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति' इति व्यपदेशस्तत्रापि यन्न भवतीति भेदप्रतियोगिताया एव तदवच्छिन्नत्वम्। साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यमित्यत्रापि वह्नित्वावच्छिन्नवह्निसामानाधिकरण्यमिति नार्थः। किन्तु वह्नित्वावच्छिन्ना या वह्निनिष्ठाधेयता तादृशाधेयतानिरूपकाधिकरणवृत्तित्वमेव। एवं सर्वत्र। क्वचित्तु केवले विशिष्टार्थेऽवच्छिन्नशब्दः शिष्टैर्लक्षणया प्रयुज्यत इत्यन्यादिति द्रष्टव्यम्। नन्वकारणीभूतारण्यस्थदण्डेऽपि दण्डत्वसत्त्वादवच्छेदकस्य तस्य कारणतातिरिक्तवृत्तित्वादव्याप्तिरिति चेन्न। द्विविधा हि कारणता। फलोपधायकत्वलक्षणा स्वरूपयोग्यतालक्षणा च। तत्र फलोपधायकत्वलक्षणकारणत्वं नारण्यस्थदण्डे इति नावच्छेदकं तत्र दण्डत्वम्। स्वरूपयोग्यत्वलक्षणकारणत्वमरण्यस्थदण्डे विद्यत एवेति तदवच्छेदकं भवत्येव दण्डत्वम्। प्रत्युत दण्डत्वमेव स्वरूपयोग्यतापरिचायकम्। अत एव योग्यतोक्तावबच्छेदकजिज्ञासा। तेन विना योग्यतापरिचयानुपपत्तेः। परिचयोऽभिव्यक्तिः प्रत्यक्षात्मिका। प्रत्यक्षं बाह्यं मानसं वेत्यन्यत्। ननु घटवद् भूतलमिति ज्ञानाऽप्रतिबन्धकेऽपि घटाभावसंशये प्रतिबन्धकतावच्छेदिकाया घटाभाववद्भूतलत्वावच्छिन्नविषयतायाः सत्त्वादव्याप्तिरिति चेन्न। तत्रापि संशयान्यत्वादिविशिष्टतादृशविषयताया अनतिरिक्तवृत्तित्वात्। अवच्छेदकतायास्तत्र सत्त्वेऽपि तस्यास्तदवच्छेदकतापर्याप्त्यधिकरणत्वाभावात्।

अथ पर्वतो वह्निमानित्याद्यबाधितप्रतीतेर्वह्न्यधिकरणताया अतिरिक्तवृत्तेरपि पर्वतत्वादेरवच्छेदकत्वम्। न च तत्र पर्वतत्वादिसामानाधिकरण्यमेव प्रतीयते न तु तदवच्छिन्नत्वमधिकरणत्वे इति वाच्यम्। तथा सति ह्रदपर्वतोभयं वह्निमदिति प्रत्ययापत्तेः। न च व्यासज्यवृत्तिधर्मस्य न सामानाधिकरण्येन भानम्, किन्तु अवच्छेदकतयैवेति नियमान्नानुपपत्तिरिति वाच्यम्। तथा सति पर्वतमहानसौ वह्निमन्ताविति प्रत्ययस्य भ्रमत्वापत्तेः। पर्वतमहानसोभयत्वस्य वह्निरहितपर्वतादावपि सत्त्वाद्वह्न्यधिकरणतातिरिक्तवृत्तित्वात्। न चोभयत्वपर्याप्त्यधिकरणतावदवृत्तित्वमुभयत्व-

समानाधिकरणं, ह्रदपर्वतोभयत्वपर्याप्त्यधिकरणे ह्रदपर्वतोभयस्मिन् वह्निविरहान्न ह्रदपर्वतोभयं वह्निमदिति प्रमेति वाच्यम्। उभयवृत्तेः प्रत्येकस्मिन्नपि सत्त्वात्। पर्वतमहानसोभयस्मिन् कस्यापि वह्नेरसत्त्वेन पर्वतमहानसोभयं वह्निमदिति प्रत्ययानुपपत्तेश्च। किं च वह्न्यधिकरणत्वं चत्वरादावप्यस्तीति तत्र पर्वतत्वविरहान्न्यूनवृत्तिः। यदि च वह्न्यधिकरणत्वं पृथगेव चत्वरादौ तदा प्रत्येकपर्वतादावपि पृथगेवेति कस्याश्चिदप्यधिकरणतायाः पर्वतत्वसमनियतत्त्वं न स्यात्। वह्न्यधिकरणतात्वेन संग्रहे चत्वरादिगताधिकरणत्ववारणमसंभवि। एवं घटः पटो नेत्यत्र पटभेदाद्य-धिकरणतावच्छेदकत्वं घटत्वस्य न स्यात्। पटभेदाधिकरणताया वृक्षादावपि सत्त्वात्। समानाधिकरण्यमात्रोक्तौ द्रव्यं न पट इत्यपि प्रमा स्यात्। द्रव्यत्वसमानाधिकरण्येन वृक्षादौ पटभेदसत्त्वात्। न चेष्टापत्तिः। प्रतियोग्य-वृत्तिधर्मस्यैवानुयोगितावच्छेदकत्वनियमात्। अत एव घटपटोभयं न पट, इत्यादिकमपि ज्ञानं प्रमां नाभ्युपजग्मुर्भट्टाचार्यादयः। एतेनात्र द्रव्यत्वं नावच्छेदकमित्युक्तावपि न निस्तारः। द्रव्यत्वसामान्येनैव द्रव्योपस्थितेः। एवं भूतलं द्रव्यवदित्यपि प्रत्ययो न घटते। द्रव्यत्वस्याऽवृत्तिगगनादवपि सत्त्वात्तत्राधेयताविरहादतिरिक्तवृत्तिद्रव्यत्वस्यावच्छेदकत्वानुपपत्तेः। न च तत्रापि द्रव्यत्वसामानाधिकरण्यमात्रं प्रतीयते न तु तदवच्छिन्नत्वमिति युक्तम्। द्रव्यगुणत्वोभयवद् भूतलगिति प्रत्ययप्रामाण्यापत्तेः। तदुभयत्व-समानाधिकरणद्रव्यनिष्ठाधेयताकाधिकरणत्वस्य भूतले सत्त्वात्। यत्तु वह्नीनां नानात्वाद् वह्न्यधिकरणत्वमपि नानैवेति पर्वतपदं बुद्धौ विपरिवर्तमान-पुरोवर्तितत्परं चेति न दोष इति। तदसत्। घटो द्रव्यमित्यत्र द्रव्यत्वस्यै-कत्वात्तदधिकरणतायाः सर्वद्रव्यवृत्तित्वेन घटत्वस्य न्यूनवृत्तित्वावश्यंभावात्। अत्र वदन्ति। घटो द्रव्यमित्यादौ घटत्वाद्यवच्छिन्नोद्देश्यतैव विषयः। न तु घटत्वावच्छिन्नमधिकरणत्वमपि। अधिकरणतायाः किंचिद्धर्मानवच्छिन्नत्वात्। अन्यथा घटत्वाधिकरणतापि घटे वर्तत इति तदवच्छेदकं स्वयं स्वं स्यात्। अवच्छेदकान्तरविरहात्। पर्वतत्वावच्छिन्नाया धूमाधिकरणतायाः स्वीकारे तस्याः सर्वपर्वतवृत्तित्वेन बहुषु पर्वतेषु च वह्न्यभावसत्त्वाद् व्यापकत्वं वह्नेर्नस्यात्। न च वह्न्यधिकरणतावच्छेदकमपि पर्वत इति वह्न्यधिकरण-त्वाभावोऽपि पर्वतान्तरे न स्यादिति वाच्यम्। मास्तु वह्न्यधिकरणत्वा-भावः। वह्न्यभावस्तु सुलभ एव। अन्यथा अपरपर्वते वह्निर्नास्तीति प्रतीतिर्न स्यात्। तथा च पर्वतो वह्निमानित्यादौ पर्वतत्वसामानाधिकरण्यमात्रं वह्नौ

वह्न्यधिकरणतायां वा प्रतीयते । न चावच्छेदकावच्छेदकेन साध्यतायामधिकरणता पर्वतत्वावच्छिन्ना भासत इति वाच्यम् । तत्रापि व्यापकत्वलक्षणमवच्छिन्नत्वमेव प्रतीतिविषयः । वह्न्यधिकरणतायाश्चत्वरादावपि सत्त्वात् । यदि च स्वरूपसम्बन्धविशेषरूपावच्छेदकत्वमेव तत्रेत्याग्रहस्तदपि पर्वतत्वाच्छेदेन वह्निः साध्यते न तु वह्न्यधिकरणतेति साऽवच्छेदकता पृथगेव वक्तव्या मूलादिनिष्ठावच्छेदकतावत् । वह्न्यधिकरणतासाध्यस्थले कामं तादृशपर्वतत्वाच्छेद्यत्वं तत्राप्युपगम्यताम् । न पुनर्नियामकरूपोऽवच्छेदकः । एवं स्थिते द्रव्यं गुणवदित्यादावपि द्रव्यत्वसामानाधिकरण्यादिना गुणवत्वप्रतीतिसंभवाद् द्रव्यत्वस्य गुणाधिकरणतावच्छेदकत्वस्वीकारो विफलः। पर्वतजलोभयं वह्निमदित्यादावुभयत्वपर्याप्त्यधिकरणे उभयस्मिन् वह्निविरहान्न प्रमाणत्वापत्तिः । एवमाधेयतापि न किंचिद्धर्मावच्छिन्ना । न च ह्रदो वह्निमानिति बुद्धिविरहेऽपि ह्रदो द्रव्यवानिति प्रतीतिसत्त्वाद् वह्नित्वावच्छिन्नाधेयतानिरूपिताधिकरणता ह्रदे नास्ति द्रव्यत्वावच्छिन्नाधेयतानिरूपिताधिकरणताऽस्तीति स्वीकर्तव्यमिति वाच्यम् । आकाशादावाधेयता विरहेण द्रव्यत्वावच्छिन्नाधेयताया असंभवात् । तथापि द्रव्यत्वसमानाधिकरण्यमाधेयतायां प्रतीयते । वह्नित्वसमानाधिकरणा वह्नित्वव्याप्याऽधेयता काचित् । द्रव्वत्वसमानाधिकरणा द्रव्यत्वव्याप्याऽपरेति । तथा चोक्त व्याप्तिसिद्धान्तलक्षणे जगदीशतर्कालंकारेण "धूमत्वावच्छिन्नाधिकरणतायां मानाभाव" इति । धूमपरमाणोरपि धूमत्वात्तत्राधेयताविरहाद्धूमत्वावच्छिन्नाधेयताया अयोगादिति तस्य भावः । नन्वेवं साध्यसम्बन्धितावच्छेदकहेतुतावच्छेदकवत्त्वं व्याप्तिरिति मणिग्रन्थतदीयटीकाद्यसांगत्यापत्तिः धूमत्वस्य वह्निसम्बन्धितान्यूनवृत्तित्वात् । न च वह्निसम्बन्धित्वं तत्तद्व्यक्तिनिष्ठंतत्तद् व्यक्तित्वावच्छिन्नं पृथगेव । वह्निसम्बन्धितावच्छेदकत्वेन रूपेण सर्वसंग्रहाल्लक्षणसमन्वय इति वाच्यम् । एवमपि धूमत्वस्य तत्त्वासिद्धेः । तत्तद्व्यक्तित्वावच्छिन्नसम्बन्धित्वेनैवोपपत्तेः धूमत्वावच्छिन्नायां तस्यां मानाभावात् । धूमो वह्निसम्बन्धीति प्रतीतिस्तु पर्वतो वह्निमानित्येतत्तुल्यैवेति चेन्न । धूमत्वाच्छेदेन वह्निसम्बन्धित्वमस्तीति प्रतीतेः पृथगेवावच्छेदकं तत् । न तु व्याववर्त्तकमिति वक्ष्यामः । परे तु यद्यपि परमाणुसाधारणधूमत्वावच्छिन्नाधेयतानिरूपिताधिकरणता मास्तु । प्रतीत्यनुरोधेन परमाणुव्यावृत्तधूमत्वावच्छिन्नायां पृथगाधेयतायां को बाधः । जन्यधूमत्वादिकमपिधूमत्वव्याप्यजातिविशेष एव । यथा जन्यजलत्वादिकम् । कालिकसमवायोभय-

सम्बन्धावच्छिन्ना वा धूमत्वावच्छिन्नाधेयता भवतु। एवं यत्र पर्वतत्वावच्छेदेन वह्निप्रतीतिस्तत्र वह्न्यधिकरणता पर्वतत्वावच्छिन्नाप्यस्तु। चत्वरादिगतवह्न्यधिकरणताया भिन्नत्वान्न न्यूनवृत्तिता। न च भूतभाविवर्तमानसकलपर्वतेषु वह्निसत्त्वे मानाभान्न समनियतत्वसंभव इति वाच्यम्। तथा सति पर्वतत्वावच्छेदेन वह्न्यनुमितिर्भ्रान्तिरेव भवन्मतेऽपि भविष्यति। अयं पर्वतो वह्निमानिति प्रमा। द्रव्यं गुणवदित्यादिश्च प्रमा। तथा च साध्यसम्बन्धितावच्छेदकमित्यपि व्याप्तिलक्षणं सुगममेवेति प्राहुः। ननु घटत्वेन पटो नास्तीत्यत्र प्रतियोगित्वं पटे। घटत्वं चान्यत्रेति कथं प्रतियोगितावच्छेदकत्वं घटत्वस्य। अत्र मणिकृतः। व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावो नाभ्युपगम्यते। घटत्वेन पटो नास्तीति च पटे घटत्वं नास्तीत्यर्थः। न चैवमपि द्रव्यत्वेन घटो नास्ति, घटत्वेन द्रव्यं नास्तीत्यादौ का गतिरिति वाच्यम्। घटत्वेन द्रव्यं नास्तीत्यादौ द्रव्यत्वमपि प्रतियोगितावच्छेदकतया भासते, द्रव्यत्वेन घटो नास्तीत्यत्र घटत्वमपि प्रतियोगितावच्छेदकतया भासत इति घटत्वविशिष्टद्रव्यत्वावच्छिन्नप्रतियोगिताकस्य द्रव्तत्वविशिष्टघटत्वावच्छिन्नप्रतियोगिताकस्य च तयोर्विषयत्वाद् विशिष्टस्य प्रतियोगितासमनियतत्वेन दोषाभावात्। नन्वेवमपि संयोगेन प्रमेयं नास्तीत्यभावीयप्रतियोगिता द्रव्येष्वेव। तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगित्वं तेन सम्बन्धेन वर्तमाने एवेति नियमात्। प्रमेयत्वं पुनः सप्तपदार्थवृत्तीत्यतिप्रसक्तमिति चेन्न। यथोक्तनियमाभ्युपगमे व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावविलोपापत्तेः। तथा च संयोगावच्छिन्नत्ववैशिष्ट्येन कामं संयोगिनि द्रव्ये एव वर्तताम्। प्रतयोगिता तु प्रमेयमात्रवृत्तिरेव।

दीधितिकृतस्तु घटत्वेन पटो नास्तीत्यादेरानुभवविकत्वेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावमङ्गीचक्रुः। तन्मते स्वरूपसम्बन्धरूपावच्छेदकताया अन्यूनानतिप्रसक्तत्वं प्रायिकं. न लक्षणम्। किन्तु वक्ष्यमाणाखण्डावच्छेदकतात्ववत्त्वमेव। एतन्मते संयोगेन प्रमेयं नास्तीत्यभावप्रतियोगितायाः संयोगिप्रतियोगिन्येव स्वीकारेऽपि न क्षतिः। एवं घटत्वेन द्रव्यं नास्तीत्यभावप्रतियोगिताया द्रव्यमात्रे स्वीकारेऽपि ॥ ५३ ॥

**प्रतियोगित्वप्रभृतिं स्वसजातीयाद् व्यवच्छिनत्त्ययेषः।**
**अयमेव नियमयति च सामान्यविशेषभावादिम् ।। ५४ ।।**

यह अवच्छेदक धर्म सजातीय अन्य प्रतियोगित्वादि से पृथक् करता है। जैसे घटत्वावच्छिन्नप्रतियोगिता पटत्वावच्छिन्नप्रतियोगिता से भिन्न है जब कि प्रतियोगितात्वेन दोनों एक हैं। यही अवच्छेदक धर्म सामान्य एवं विशेष भावादि का नियामक है। जैसे द्रव्यत्वावच्छिन्न प्रतियोगिता घट में होने पर भी सामान्य (पटादिसामान्य) है। घटत्वावच्छिन्नप्रतियोगिता विशेष अर्थात् केवल घट में है। अतः नियामक धर्म अवच्छेदक है ऐसी व्याख्या भी कर सकते हैं॥ ५४॥

ननु किमर्थोऽयमवच्छेदकधर्मस्वीकारः? तत्राह—प्रतियोगित्वेति। विसजातीयादाधारत्वाधेयत्वादितो व्यावृत्तिः प्रतियोगितात्वाधारतात्वाधेयतात्वाद्यखण्डधर्मैरेव भवितुमर्हतीत्यत उक्तं स्वसजातीयादिति। भूतले घटो नास्तीति प्रतीतिसत्त्वेऽपि द्रव्यं नास्तीति प्रतीतिर्न जायते। तत्र घटस्यापि द्रव्यत्वात्तत्रापि प्रतियोगिताभ्युपगन्तव्या। भदेश्च घटो नास्ति द्रव्यं नास्तीत्यनयोर्वक्तव्यः। तत्र घटो नास्तीति घटत्वावच्छिन्ना प्रतियोगिता भासते। द्रव्यं नास्तीति द्रव्यत्वावच्छिन्ना। न चाखण्डाभाववैलक्षण्यादेवोपपत्तौ प्रतियोगिताभेदवैयर्थ्यमिति वाच्यम्। तद्वैलक्षण्यनियामकस्य कस्यचिदवश्यं वक्तव्यत्वात्। न हि द्रव्याभावत्व-घटाभन्वत्वादिकं जातिरखण्डोपाधिर्वा। घटीयत्वाभावत्वयोरेव घटाभावत्वरूपत्वात्। अभावत्वं यद्यप्यखण्डोपाधिस्तथापि तन्न घटाभावपटाभावयोर्व्यावर्तकम्। नापि स्वतो व्यावृत्ता अभावाः। चतुर्थपञ्चमपदार्थयोः सामान्यविशेषयोरखण्डोपाधेश्चैव स्वतो व्यावृत्तत्वात्। तस्मात्प्रतियोगिताभेदादेवाभावभेदः। प्रतियोगिताभेदश्च घटत्वद्रव्यत्वाद्यवच्छेदकभेदादित्युक्तम्। तत्र घटत्वादेर्जातित्वात्स्वतो व्यावृत्तत्वम्। यत्र तु दण्डी नास्तीत्यादौ प्रतियोगितावच्छेदकं दण्डादिस्तत्र दण्डस्य स्वतो व्यावृत्तत्वविरहाद् अवच्छेदकताया अवच्छेदकं दण्डत्वादिकमुपगम्यते। दीधितिकारस्तु प्रतियोगित्वादावपि दण्डत्वादिकमेवावच्छेदकमाहुः। तथा च व्याप्तिसिद्धान्तलक्षणे—"दण्ड्यादिसाध्यके परम्परासम्बद्धं दण्डत्वादिकमेव साध्यतावच्छेदकमि"ति। न च घटे घटत्वावच्छिन्ना द्रव्यत्वावच्छिन्ना चेति द्वे प्रतियोगिते वर्तेते। तत्र द्रव्यं नास्तीती प्रतीतौ प्रथमा प्रतियोगिता किं न भासताम्। तथा च भूतले द्रव्यं नास्तीति प्रतीतिः प्रमा कुतो न जायतामिति वाच्यम्। द्रव्यं नास्तीत्यत्र प्रकृतिजन्यबोधे प्रकारीभूतद्रव्यत्वावच्छिन्नैव प्रतियोगिता भासते न तु घत्वावच्छिन्नेति नियमस्वीकारात्। तथा प्रतियोगित्वादीनां किंचिद्धर्मावच्छिन्नत्वभान-

नियमाभ्युपगमाद् द्रव्यं नास्तीत्यत्र घटत्वावच्छिन्नत्वभानं विनैव तादृशी प्रतियोगिता किं न भासतामिति प्रश्नस्यापि नावसरः। अत एव तद्व्यक्तिर्नास्तीत्यादावपि तद्व्यक्तित्वावच्छिन्नैव प्रतियोगिता तद्व्यक्तित्वावच्छिन्नतयैव च प्रतियोगिताभानमिति सिद्धान्तः। तद्व्यक्तित्वं नाम तद्व्यक्तितादात्म्यमेव। न चैवं तदात्म्यावच्छिन्नप्रतियोगिताकस्यान्योन्याभावत्वापत्तिः। तदात्म्यस्य संसर्गतायाऽवच्छेदकत्वे एव तत्त्वस्वीकारात्।

इदं तु बोध्यम्। अत्यन्ताभावस्थलेऽन्योन्याभावस्थले च प्रतियोगितायाः किंचिद्धर्मावच्छिन्नत्वनियमः। ध्वंसस्थले घटो ध्वस्त इत्यादौ घटत्वादेर्नावच्छेदकत्वम्। सर्वघटध्वंसस्यासंभवात्। महाप्रलयाभ्युपगमेऽपि तत्पूर्वबहुतरघटध्वंसाच्चरमघटध्वंसेनैवोपपत्तौ घटत्वावच्छिन्नध्वंसस्यातिरिक्तस्य स्वीकारो व्यर्थ एव। तदाग्रहे वा कार्यत्वावच्छिन्नध्वंस एवैकः स्यात्। एवं प्रागभावीयप्रतियोगितापि।

ननु ध्वंसप्रागभावप्रतियोगितयोः किंचिदनवच्छिन्नत्वे किं तयोर्व्यावर्तकम्। तथा च यत्किंचिद् द्रव्ये नष्टे तदीय प्रतियोगितामादाय द्रव्यं नास्तीत्यत्यन्ताभावप्रत्ययः कथं न भवति। अत्यन्ताभावीयप्रतियोगितातस्तस्या भेदासिद्धेरिति चेत्। अत्र केचित्। ध्वंसादिप्रतियोगितापि तत्तद्व्यक्तित्वावच्छिन्ना भवत्येव। तथा च तस्या द्रव्यत्वावच्छिन्नीयसंसर्गत्वविरहान्न दोषः। अन्ये तु निरवच्छिन्नत्वमेव भेदकधर्म इत्याहुः। नन्वेवमपि घटभेदघटात्यन्ताभावीयप्रतियोगितयोः को व्यावर्तकः। उभयोर्घटत्वावच्छिन्नत्वतौल्यात्। तथा च भूतले घटकालेऽपि घटभेदसत्त्वात्तदीयप्रतियोगितामादाय घटो नास्तीति कथं न प्रतीतिः। यदि च घटभेदीयप्रतियोगिता न घटात्यन्ताभावसंसर्गस्तदा घटाभावीप्रतियोगिता न द्रव्याभावीयसंसर्ग इत्यत एवोपपत्तौ घटत्वावच्छिन्नत्वद्रव्यत्वावच्छिन्नत्वाभ्यां भेदकरणं व्यर्थमिति चेन्न। घटाभावद्रव्याभावयोः कुतो भेद इति जिज्ञासायां घटत्वावच्छिन्नप्रतियोगिताकत्वद्रव्यत्वावच्छिन्नप्रतियोगिताकत्वाभ्यामेव भेदो वक्तव्यः। घटाभावत्वद्रव्याभावत्वयोरखण्डधर्मत्वविरहात्। यद्यपि तत्तदभावा अखण्डा एव। तथापि व्यावर्त्तको वक्तव्य एव, यथा तत्तद्घटादि परमाण्वादेरप्यखण्डत्वेऽपि तदवयवा विशेषाश्चैवेतरव्यावर्त्तकाः। भेदत्वमत्यन्ताभावत्वं च पृथगखण्डधर्मद्वयमिति तत एव तयोर्व्यावृत्तौ ताभ्यां तदीयप्रतियोगितयोर्व्यावृत्तिसिद्धेः। अयं घटो न, इह घटो नास्तीति प्रतीतिवैलक्षण्यदर्शनात्। एवं पुनः घटो ध्वस्तः, घटो भविष्यति, घटो नास्तीत्यादीनां

प्रतीतीनां वैलक्षण्यदर्शनात् ध्वंसत्वप्रागभावत्वात्यन्ताभावत्वानां पृथक् पृथगखण्डधर्मत्वसिद्धेः एकघटध्वंसीयप्रतियोगितामादाय घटो नास्तीति प्रतीत्यापत्तिर्न भवति ध्वंसीयत्वादिना प्रतियोगितापार्थक्यादिति तत्पार्थक्यार्थं ध्वंसीयप्रतियोगित्वादीनां तत्तद्व्यक्तित्वाच्छिन्नत्वस्वीकारो विफल एवेति सुधियो विदांकुर्वन्तु। येषां मते ध्वंसत्वादिकं नाखण्डधर्मः, किन्तु भेदत्वाभावत्वद्वयमात्रंतथा, विनाश्यभावत्वं प्रागभावत्वं, साद्यभावत्वं ध्वंसत्वम्, त्रैकालिकत्वे सति संसर्गावच्छिन्नप्रतियोगिताकाभावत्वमत्यन्ताभावत्वम्, ध्वंसादिप्रतियोगितायास्तत्तद्व्यक्तित्वावच्छिन्नत्वाद् भेदः; तेषां सादित्वमुत्पत्तिमत्त्वं प्रागभावप्रतियोगिताश्रयत्वम्; एवं विनाश्यत्वं ध्वंसप्रतियोगित्वमित्यन्योन्यलक्षणेऽन्योन्यप्रवेशादितरेतराश्रयत्वदोषः प्रसज्यते। तद्वारणाय यत्नः कर्तव्यः स्यात्। एवं भेदत्वमेवैकोऽखण्डधर्मः। भावभिन्नत्वमभावत्वमिति मतेऽपि द्रष्टव्यम्।

स्वसजातीयादिति। घटत्वाद्यवच्छिन्नप्रतियोगितां द्रव्यत्वावच्छिन्नप्रतियोगितातो व्यवच्छिनत्ति। विसजातीयद् व्यावृत्तिस्तु प्रतियोगितात्वाधारतात्वादिविलक्षणाखण्डधर्मैरेव भविष्यति। अन्यथा भूतले घटसत्त्वे घटत्वावच्छिन्नाधेयता वर्तते तस्या घटत्वावच्छिन्नप्रतियोगितातो भेदकविरहाद् घटो नास्तीति तत्र प्रत्ययः स्यात्। तथा च प्रतियोगितात्वाधेयतात्वाभ्यामेव तयोर्भेदो वक्तव्य इति। अयमेव नियमयतीति। अयमेवाच्छेदकाख्यधर्मः सामान्यविशेषभावादिं नियमयति। द्रव्याभावः सामान्याभावः। घटाभावो विशेषाभाव इत्यादिनियामकोऽवच्छेदकभेद एव। अन्यथा घटस्यापि द्रव्यत्वाद् घटाभावो द्रव्याभाव एवेति पटवति घटो नास्तीतिवत् द्रव्यं नास्तीत्यपि प्रत्ययः स्यात्। घटद्रव्यं नास्तीति प्रतीतिस्तु भवत्येव। तत्र द्रव्यत्वं परिचायकमात्रम्। एवं प्रमेयवह्निर्नास्तीति। गुरुधर्मस्यावच्छेदकत्वस्वीकारेऽपि व्यर्थविशेषणस्यावच्छेदकत्वास्वीकारात्। एकेन धर्मेण व्यावृत्तिसिद्धेः ॥ ५४ ॥

**तदवच्छेदकतात्वमखण्डमवच्छेद्यतात्वमप्येवम्।**
**तेनावच्छेदकता नियतावच्छेद्यता चैव ॥ ५५ ॥**

वह अवच्छेदकतात्व और अवच्छेद्यतात्व दोनों अखण्ड धर्म हैं। उनसे अवच्छेदकता और अवच्छेद्यता ( अवच्छिन्नता ) नियन्त्रित हैं ॥ ५५ ॥

अवच्छेदकत्वप्रतियोगित्वादीनां भेदोऽवच्छेदकतात्वादिरूपाखण्डधर्मैरेव। न चावच्छेदकतानिरूपकत्वमेवावच्छेद्यतात्वमिति वाच्यम्। प्रतियोगितात्वादावतिव्याप्तेः। विनिगमनाविरहाच्च। अवच्छेद्यतानिरूपकत्वमवच्छेदकत्वमिति वक्तुं शक्यत्वात्। घटत्वेन घटो नास्तीत्यादितृतीयाविभक्तिप्रयोज्यविषयताश्रयवृत्त्यखण्डधर्मवत्त्वमवच्छेदकतात्वाश्रयत्वं वा लक्षणम् ॥ ५५ ॥

**व्यावृत्तेऽनुल्लिखितेऽवच्छेदकता मतानवच्छिन्ना।**
**अन्यावच्छेदकता सावच्छिन्ना मता विदुषाम् ॥ ५६ ॥**

जो स्वतः व्यावृत्त है और अनुल्लिख्यमान है उसमें रहनेवाली अवच्छेदकता निरवच्छिन्न होती है। उससे भिन्न अवच्छेदकता सावच्छिन्न होती है। जैसे 'घटो नास्ति' में घटत्व का उल्लेख नहीं है। अतः घटत्वनिष्ठ प्रतियोगितावच्छेदकता निरवच्छिन्न है। ( किसी से अवच्छिन्न नहीं ) किन्तु घटत्ववान् नास्ति कहेंगे तो घटत्व का उल्लेख हो गया। तब घटत्वत्व प्रतियोगितावच्छेदकतावच्छेदक हो जायेगा। दण्डी नास्ति यहाँ प्रतियोगी दण्डी है। प्रतियोगितावच्छेदक दण्ड है। प्रतियोगितावच्छेदकतावच्छेदक दण्डत्व है। आगे फिर अवच्छेदक नहीं होगा। क्योंकि दण्डत्व का उल्लेख नहीं है। अगर उल्लेख हुआ तो आगे भी अवच्छेदक होगा ही ॥ ५६ ॥

घटो नास्तीत्यादौ यत्र स्वतो व्यावृत्तमनुल्लिखितं घटत्वादिकमवच्छेदकं तत्रावच्छेदकता निरवच्छिन्ना भवति। अन्यथानवस्थाप्रसङ्गात्। अन्यत्र सर्वत्रावच्छेदकता सावच्छिन्ना। तद्यथा दण्डी नास्तीत्यत्र प्रतियोगिता दण्डिनि प्रतियोगितावच्छेदकता दण्डे तत्रावच्छेदकता दण्डत्वस्य। स्वतो व्यावृत्तजात्यादिरपि यत्रोल्लिख्यते तत्र तन्निष्ठावच्छेदकतापि सावच्छिन्ना भवति। यथा घटत्ववान् नास्ति जातिमान् नास्तीत्यादौ घटत्वत्वजातित्वाद्यवच्छिन्नावच्छेदकता ॥ ५६ ॥

**अपरे तु परम्परयावच्छेदकतामिहानवच्छिन्नाम्।**
**आहुरवच्छेदकतापरम्परामेव तु परेऽत्र ॥ ५७ ॥**

दूसरे लोगों का मत है कि 'दण्डी नास्ति' में प्रतियोगिता दण्डी में और प्रतियोगितावच्छेदकता परम्परया सीधे दण्डत्व में है। फलतः अवच्छेदकता निरवच्छिन्न ही होती है। और अन्य मनीषी अवच्छेदकताओं की ही परम्परा मानते हैं। जैसे पहले दिखाया ॥ ५७ ॥

अपरे तु सर्वत्रावच्छेदकता निरवच्छिन्नैव। उक्तं च दीधितिकृता दण्ड्यादिसाध्यके परम्परासम्बद्धं दण्डत्वादिकमेव साध्यतावच्छेदकमिति। प्रतियोगितावच्छेदकादिकमपि तथैव। अन्यथा दण्डिमान् गृहत्वादित्यादौ दण्ड्यभावप्रतियोगितावच्छेदकं दण्ड:, साध्यतावच्छेदकं तु तदन्यद्दण्डत्वमिति व्याप्तिसिद्धान्तलक्षणस्यातिप्रसक्तत्वापत्तेः। इत्थं चावच्छेदकता सर्वत्रानवच्छिन्नैव। परे तु अवच्छेदकतापरम्परैव न तु परम्परयावच्छेदकत्वम्। यत्र मध्ये नार्थोल्लेखस्तत्र कामं परम्परयावच्छेदकत्वं किन्तु दण्डीत्यादौ दण्डादेरुल्लेखाद्दण्डादीनामप्यवच्छेदकत्वमस्त्येव। तथा च वह्न्यभावाधिकरणवृत्तित्वाभावो धूमस्य व्याप्तिरित्यत्र अभावीयप्रतियोगिता वृत्तित्वे तत्र विशेषणमधिकरणं प्रतियोगितावच्छेदकम्। तत्र विशेषणं वह्न्यभावः प्रतियोगितावच्छेदकतावच्छेदकम्। तत्र विशेषणं वह्निः प्रतियोगितावच्छेदकतावच्छेदकतावच्छेदकम्। तत्र विशेषणं वह्नित्वं प्रतियोगितावच्छेदकतावच्छेदकतावच्छेदकतावच्छेदकम्। तदेवं वक्तव्यं वह्नित्वनिष्ठावच्छेदकतानिरूपितवह्निनिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठप्रतियोताकाभावः वह्न्यभावाधिकरणवृत्तित्वाभाव इति संक्षेपः ॥ ५७ ॥

**अनवच्छिन्नत्वं स्याद्भेदकमिह तन्न यदि तु मन्येथाः।**
**निरवच्छिन्नावच्छेदकतात्वं भेदकमखण्डम् ॥ ५८ ॥**

यद्यपि घटो नास्ति इत्यादि में घटत्वपटत्वादि आश्रय स्वतो व्यावृत्त होने से अवच्छेदकताओं की व्यावृत्ति होगी। किन्तु घटो नास्ति, जातिमान् नास्ति यहाँ घटत्व भी जाति होने से दो अवच्छेदकताओं का भेद कैसे हो? उत्तर है—निरवच्छिन्नत्व और सावच्छिन्नत्व को लेकर भेद है। यदि इतने से संतोष न हो तो निरवच्छिन्नावच्छेदकतात्व को ही अखण्ड पृथक् धर्म मानना होगा। जो भेदक होगा ॥ ५८ ॥

ननु सावच्छिन्नाया अवच्छेदकताया भेदकस्तदवच्छेदकधर्मः स्यात्। निरवच्छिन्ना कथं भिद्यताम्। न च तदाश्रयजात्यादेः स्वतो व्यावृत्तत्वात्तत एवावच्छेदकतापि व्यावर्ततेति वाच्यम्। एकत्र जातौ यत्र द्विविधावच्छेदकता तत्र तदयोगात्। तथा च जातिमत्वान् (जात्याश्रयवान्) इत्यत्र जातित्वावच्छिन्ना या जातिनिष्ठाऽवच्छेदकता ततो घटत्वनिष्ठावच्छेदकताया भेदविरहात् घटविरहवत्यपि पटवति घटत्वनिष्ठजातित्वावच्छिन्नाधेय-

तानिरूपिताधिकरणतामादाय घटवानिति प्रतीतिः स्यादत आह—अनवच्छिन्नत्वमिति। तथा चावच्छिन्नत्वाभावस्य घटत्वनिष्ठावच्छेदकतायां विशेषत्वाज्जातित्वावच्छिन्नावच्छेदकतातो भिन्नत्वान्न घटाभाववति घटवत्त्वप्रतीतिः। नन्वनवच्छिन्नत्वमवच्छेद्यत्वत्वावच्छिन्नप्रतियोगिताकाभावः। तत्रावच्छेद्यत्वत्वे प्रमेयत्वावच्छिन्नावच्छेदकतासत्त्वात्तदभेदमादायावच्छेद्यत्वत्वावच्छिन्नाश्रयत्वमेव तत्रेति तदभावो दुर्घट इत्यत आह—तन्न यदीति। तथा च निरवच्छिन्नावच्छेदकतात्वमखण्ड एव धर्मं इति तेन सावच्छिन्नावच्छेदकतातो भेद इति भावः॥ ५८॥

**आधेयत्वप्रभृतेर्भेदात्तत्तन्निरूपकत्वेन।**
**सिद्धोऽवच्छेदकताभेदो नो भेदकोऽन्योऽत्र॥ ५९॥**

घटवद् भूतलं, घटाभाववद् भूतलं इत्यादि में आधेयतावच्छेदकता और प्रतियोगितावच्छेकता आदि में भेद कैसे होगा? सुनो। आधेयता प्रतियोगिता आदि आधेयतात्वादिरूपेण भिन्न होने से तन्निरूपकत्वेन अवच्छेदकता भिन्न हो जायेगी। उसके लिये अन्य भेदक आवश्यक नहीं है॥ ५९॥

ननु निरवच्छिन्नसावच्छिन्नावच्छेदकतयोरेवं भेदसाधनेऽपि घटवद् भूतलमिति घटाभाववद्भूतलमिति चोभयत्राधेयतावच्छेदकत्वप्रतियोगितावच्छेदकत्वयोर्निरवच्छिन्नत्वात्को भेदक इत्यत आह—आधेयत्वेति। आधेयतात्वप्रतियोगितात्वादिभिराधेयताप्रतियोगितादेर्भिन्नत्वात्तत्तन्निरूपकत्वेन आधेयतावच्छेदकत्वप्रतियोगितावच्छेदकत्वयोर्भेदः सुगमः। घटत्वद्रव्यत्वादिगतावच्छेदकतानामाश्रयभेदप्रयुक्तभेदः। तथा च न तत्र भेदकत्वेव तत्तदखण्डधर्माणामनन्तानां स्वीकारापत्तिः॥ ५९॥

**भेदकभेद्यद्वयतः संसर्गोऽन्यो विशिष्टमतिविषयः।**
**सांसर्गिकी च तत्रावच्छेदकतान्यदुक्तसमम्॥ ६०॥**

विशेषण और विशेष्य से भिन्न जो विशिष्ट बुद्धि का विषय हो वह संसर्ग है। उसमें सांसर्गिक अवच्छेदकता अलग है और सांसर्गिक अवच्छेदकतात्व भी पृथक् अखण्ड धर्म है॥ ६०॥

विशेषणविशेष्याभ्यामन्यो विशिष्टमतिविषयः संसर्ग उच्यते। तत्र सांसर्गिकी अवच्छेदकतोपगम्यते। न च विशिष्टमतिविषयताविशेष एव सा वक्ष्यमाणविषयतान्तर्गता न तु पृथगिति वाच्यम्। तथा सति भ्रमत्व-

प्रमात्वविभागानुपपत्तेः। अयं सर्प इति सर्पत्वविशिष्टरज्जुविषयकमतिविषयताविशेषस्य तत्र सत्त्वात्। संसर्गतैव सांसर्गिक्यवच्छेदकता। अन्यदुक्तसममिति। संसर्गताख्यावच्छेदकतात्वमखण्डो धर्मः। तेन व्यावृत्ता संसर्गतेत्यादिकमुक्तसममित्यर्थः। न च संसर्गित्वमपि पृथग्वक्तव्यमिति वाच्यम्। उक्तत्वात्। संसर्गप्रतियोगित्वानुयोगित्वे एव संसर्गिते। ते च प्रागेव भिन्नत्वेन निरूपिते ॥ ६० ॥

**कलशवति वृत्तितावच्छेदकसंयोग एव तदभावे।**
**गदितः प्रतियोगित्वावच्छेदकरूपसंसर्गः ॥ ६१ ॥**

घटवान में वृत्तिता (आधेयता) का अवच्छेदक जो संयोगसम्बन्ध है वही घटाभाववान् में प्रतियोगितावच्छेदक संसर्ग है ॥ ६१ ॥

घटवति भूतलादौ भूतलादिनिरूपितवृत्तितायामवच्छेदकः संयोगसम्बन्धः। स एवाधेयतावच्छेदक इत्यप्युच्यते। तदभावे = भूतलादौ घटाभावे स एव संयोगः प्रतियोगितावच्छेदकसंसर्गो निगद्यते ॥ ६१ ॥

**तदवच्छेदकधर्मः संयोगत्वादिरुच्यते भेत्ता।**
**संसर्गतां तु नान्यः संसर्गः खल्ववच्छिन्द्यात् ॥ ६२ ॥**

संयोगादि में संसर्गतारूपी जो प्रतियोगित्वाद्यवच्छेदकता है उसका अवच्छेदक संयोगत्वादि धर्म है। संसर्गतावच्छेदक धर्म होता है, पर संसर्गतावच्छेदक संसर्गान्तर माना नहीं जाता ॥ ६२ ॥

संयोगादिनिष्ठा या संसर्गताऽवच्छेदकता वा तदवच्छेदकधर्मः संयोगत्वादिरुपगम्यते। स च भेदकः सजातीयायाः। संसर्गतावच्छेदकसंसर्गान्तरं तु नोपगम्यते। अनवस्थापत्तेः। किन्तु तदीयप्रतियोगित्वानुयोगित्वे तु स्वीक्रियेते एव। स तु न संसर्गतावच्छेदकः। संयोगो हि समवायेन वर्तत। संयोगानुल्लेखेन घटवद् भूतलमिति प्रयोगे किंचित्सम्बन्धानवच्छिन्ना संसर्गता भासते। घटसंयोगि भूतलमिति संयोगोल्लेखे प्रकारविधया संयोगो भासत इति तत्संसर्गविधया समवायो भासत इति विशेषः। इदं तु बोध्यम्। घटवद् भूतलमित्यत्र घटसंयोगस्य समवायो मा भासिष्ट तथापि तस्य संसर्गत्वं वस्तुगत्या विद्यत एव। यथा घट इति बुद्धौ घटत्वं स्वरूपतो भासते। मा भासिष्ट जातित्वं घटत्वे, तथापि वस्तुगत्या तदस्त्येवेति। अत एव संसर्गताख्यविषयताया इयं संसर्गता पृथगेव। ततश्च सांसर्गिकावच्छेदकतात्वमपि पृथगेव। एवं धार्मिकावच्छेदकतात्वं सांसर्गिका-

वच्छेदकतात्वं च परस्परं भिद्येते। तथा हि धार्मिकावच्छेदकता किंचित्सम्बन्धावच्छिन्ना। यथा घटो नास्तीत्यत्र घटत्वनिष्ठा प्रतियोगितावच्छेदकता समवायसम्बन्धावच्छिन्ना। न तु प्रतियोगितावच्छेदकसंसर्गता किंचित्सम्बन्धावच्छिन्नेत्युभयोः पार्थक्यम्। एतदेवात्र तुकारेण सूच्यते। संसर्गताख्यावच्छेदकता न किंचित्सम्बन्धावच्छिन्ना। धार्मिकावच्छेदकता पुनः किंचित्सम्बन्धावच्छिन्नेति। नन्वेवं किंचित्सम्बन्धावच्छिन्नत्वतदभावाभ्यामेव तयोर्भेदसंभवे पृथगवच्छेदकतात्वस्वीकारो विफल इति चेन्न। किंचित्सम्बन्धावच्छिन्नत्वतदभावौ नाम किंचित्सांसर्गिकावच्छेदकतानिरूपकत्वतदभावरूपावेव। तत्रापि का नाम सांसर्गिकावच्छेदकतेति जिज्ञासायामनवस्थापत्तेः। सांसर्गिकावच्छेदकत्वानिरूपकत्वं चावश्यं वक्तव्यम्। अन्यथा संयोगादिनिष्ठसांसर्गिकावच्छेदकतायाः संयोगत्वनिष्ठधार्मिकावच्छेदकतानिरूपकत्त्वात्तदभावविरहेण भेदानुपपत्तेः। किं च पर्वते महानसीयसंयोगेन वह्न्यभावमादाय धूमस्य व्यभिचरितत्वापत्तिरिति धार्मिकावच्छेदकतानिरूपकत्वं संसर्गतायामुपगम्यमेव। तथा च साध्यतावच्छेदकसंसर्गतावच्छेदकधर्ममात्रावच्छिन्नसंसर्गताकप्रतियोगिताकाभाववद्वृत्तित्वं व्यभिचारपदार्थ इति न दोषः। जगदीशतर्कालंकारास्तु साध्यतावच्छेदकावच्छिन्नत्वमात्रं निवेश्यतां किमिति धर्मसंसर्गयोः पार्थक्येन निवेश इत्यवोचन् व्याप्तिसिद्धान्तलक्षणे। तन्मते धार्मिकसांसर्गिकावच्छेदकतासाधारणमेकमेवावच्छेदकतात्वमखण्डम्। पूर्वोक्तयुक्त्या तद्व्याप्यौ धार्मिकावच्छेदकतात्व सांगर्गिकावच्छेदकतात्वलक्षणावखण्डधर्मौ च स्वीकर्तव्यावेव। एतयोर्वक्ष्यमाणयोश्चैकावच्छेदकतात्वस्वीकारे उद्देश्यग्रन्थेऽवच्छेदकत्वपदं सामान्यनिर्देशः। अन्यथा त्वेकशेषेण निर्देश इति बोध्यम्॥ ६२॥

**अव्याप्यवृत्तिवृत्तेर्नियमोऽवच्छेदकादितोऽन्यस्मात्।**
**तत्रापि पूर्ववदवच्छेकतात्वादिकमखण्डम्॥ ६३॥**

अव्याप्यवृत्ति ( अर्थात् एकदेशवृत्ति। जैसे कपिसंयोग वृक्ष में है किन्तु एकदेश शाखा में है मूल में नहीं ऐसे ) कपिसंयोगादिकी वृत्तिता का नियामक शाखा, मूल आदि अवच्छेदक अलग ही है। उसमें अवच्छेदकता पृथक् है और पृथक् अखण्ड अवच्छेदकतात्व धर्म है॥ ६३॥

अव्याप्येति। अव्याप्यवृत्तिकपिसंयोगादेः वृत्तेः = वृत्तित्वस्य नियमः खलु इतः = पूर्वोक्ताभ्यां धार्मिकसांसर्गिकावच्छेदकाभ्यामन्यस्मादवच्छेदकाद् भवतीति योजना। वृक्षे शाखायां कपिसंयोगः, न मूले कपिसंयोग इति प्रत्ययस्थलेऽवयविनो वृक्षस्यैकत्वात्तत्र विरुद्धाधिकरणताद्वयान्यथानुपपत्तेः शाखायां मूले इति सप्तम्या अवच्छेदकत्वमर्थः। न चावच्छेदकतायां सप्तमी-शासनविरहात् कथं तदर्थतेति वाच्यम्। "सप्तम्यधिकरणे चे"ति चकारेण दूरान्तिकार्थेभ्य इवावच्छेदकेभ्योऽपि सप्तमीविधानावश्यकत्वात्। देवदत्तो-ऽस्मिन् वर्षे चैत्रमासे रुग्णः वैशाखमासे स्वस्थ इत्यादिदर्शनात्। कालेना-नवच्छेदादिति ईश्वरलक्षणविशेषणस्वारस्येन कालादीनामवच्छेदकताया भगवत्पतञ्जल्यभिमतत्वात्। अथवाऽच्छेदकतासम्बन्धस्य वृत्तिनियमकत्वाद-धिकरणे एव सप्तमी। शाखायां समवायेनापि कपिसंयोगस्य निराकर्तुम-शक्यत्वात्। कथमन्यथा शाखायां पत्रे कीटो न तु विटप इति प्रतीतिः। संयोगजसंयोगश्चावयवसंयोगजन्यावयविसंयोग उच्यते। तथा चाधिकरणता-व्याप्यत्वादवच्छेदकताया अपि वृत्तिनियामकत्वमेव। न च शिरसि वेद-नेत्यादौ शिरोवच्छेदेनात्मन्येव वेदनोपगमात्तत्र कथमप्यधिकरणत्वं न शिरस इति वाच्यम्। शरीरतादात्म्याध्यासेन शरीरे दुखाद्यधिकरणत्वभ्रमेण तथोक्तेः। एतेन गृहे शब्द इत्यपि व्याख्यातम्। गृहतदवच्छिन्नाकाशयोरैक्य-भ्रमसत्त्वात्। कथमन्यथा भेरीसंयोगे शब्द इति न प्रयोगः। भेरीसंयोगा-वच्छेदेनाकाशे शब्दसत्त्वात्। अत्राप्यवच्छेदकतात्वमवच्छेद्यतात्वं च पृथग-खण्डधर्मद्वयम्। नन्वेवं वृक्षे कपिसंयोगो नास्तीत्यपि प्रयोगः स्यात्। अवच्छेदकतासम्बन्धेन तदभावसत्त्वात्। येन केनचित् सम्बन्धेना-भावार्थकतायां मूले नास्तीत्यपि न स्यादिति चेन्न। अनुल्लेखे संयोगसमवायातिरिक्तसम्बन्धानां प्रतियोगितावच्छेदकतया भानानुपगमात्। भूतले घटो नास्ति इह कपाले घटो नास्तीत्यादौ संयोगसमवायाभ्यां घटाभावभानम्। अथवा संयोगसमवायान्यतरसम्बन्धेन तद्वत्त्वनिश्चये सम्बन्धान्तरमनुल्लिख्य नाभावप्रतीतिरित्येव नियम इति वृक्षे कपिसंयोगो नास्तीति न प्रयोगः। वृक्षे मूले न कपिसंयोग इति तु मूलावच्छेदेन कपि-संयोगाभावप्रत्यय एव। न त्ववच्छेदकतासम्बन्धेन कपिसंयोगप्रतियोगिका-भावप्रत्ययः॥ ६३॥

**यद् व्याप्य वर्ततेऽव्याप्यपरमवच्छेदकं परे जगदुः।**

**अपरे चाधिकरणतावच्छेदकमेव तत्प्राहुः॥ ६४॥**

कुछ विद्वान लोग व्याप्यवृत्ति का भी पृथक् अवच्छेदक कहते हैं। जैसे पर्वतत्वावच्छेदेन वह्नि है, यहाँ वह्नि का पर्वतत्व अवच्छेदक है। अन्य विद्वान उसे वह्न्यधिकरणतावच्छेदक ही मानते हैं ॥ ६४ ॥

अव्याप्यवृत्तेरवच्छेदकवद् व्याप्यवृत्तेप्यवच्छेदकं परे जगदुः। पृथिवीत्वावच्छेदेन गन्धो वर्तते। अस्मिन्ग्रामेऽवच्छेदकावच्छेदेन चतुराः। पर्वतत्वावच्छेदेन वह्निरनुमीयत इत्यादिव्यवहारात्। तत्र तत्र गन्ध-चतुर-वह्न्यादेरवच्छेदकत्वं पृथिवीत्वैतद्ग्रामत्वपर्वतत्वादेरनुभूयते। अपरे तु न गन्धाद्यवच्छेदकं पृथिवीत्वादि पृथगङ्गीकर्तव्यम्। तत्तदधिकरणतावच्छेदकतयैवोक्तप्रतीतिव्यवहारोपपत्तेः। यदि पुनरधिकरणतावच्छेदकं नोपगम्यते तदा पृथगवच्छेदकत्वस्वीकरणमेव शरणम्। तदा च तादृशावच्छेदकतात्वादिकमपि पूर्ववज्ज्ञेयम् ॥ ६४ ॥

**सम्बद्धबुद्धिगम्यां प्रतियोग्यनुयोगितानिरूप्यां च।**
**संसर्गतां परे चाखण्डं तत्त्वं च पृथगाहुः ॥ ६५ ॥**

सम्बद्धताबुद्धि का जो विषय है, प्रतीयोगी और अनुयोगी से जो निरूप्य है संसर्गगत उस संसर्गता को कुछ विद्वान पृथक् मानते हैं और संसर्गतात्वको पृथक् अखण्ड धर्म मानते हैं। क्योंकि दो भेड़ों की मुठभेड़ में जो संयोग है उसका निर्वचन अन्यथा नहीं होगा। दोनों भेड़ों में कौन आधार और कौन आधेय हो ? ॥ ६५ ॥

यत्र नास्त्याधाराधेयभावो न वा विशेष्यविशेषणभावनियमस्तत्रापि मेषद्वयादौ सम्बद्धबुद्धिर्भवति। तद्गम्या प्रतियोगित्वानुयोगित्वनिरूप्या संसर्गता त्वभ्युपगन्तव्या। तत्र तत्त्वं संसर्गतात्वमखण्डं चाभ्युपगन्तव्यं पृथगिति परे वदन्ति। न हीयमाधेयताद्यवच्छेदकतारूपा। मेषद्वये आधाराधेयभावविरहात्। न प्रतियोगिताद्यवच्छेदकता। ससर्गः किल प्रतियोगितया प्रतियोगिनि सम्बध्नाति। तस्याः प्रतियोगिताया कथमवच्छेदकः संसर्गः स्यात्। न हि प्रतियोगितया घटे संसर्ग इव आधेयतयापि वर्तते। प्रत्युत घटादिराधेयः संयोगादिसंसर्गेण भूतलादौ वर्तते। प्रतियोगित्वं हि संसर्गीयत्वेन प्रतीयते। आधेयत्वं पुनरधिकरणीयत्वेन। अत एवाधेयत्व-प्रतियोगित्वयोर्वैलक्षण्यमपीति। परन्त्वाधेयतानिरूपितसंसर्गतैवाधेयतावच्छेदकताऽस्तु किं पृथगवच्छेदकतास्वीकारेण। आधेयतादिनिरूपकत्वादवच्छेदकत्वव्यवहारः। अस्तु वा संसर्गताव्याप्याऽवच्छेदकता सान्येति ॥ ६५ ॥

**यन्नियतपूर्वसत्तत् कारणमवदन्ननन्यथासिद्धम् ।**
**उत्तरवर्ति नियमतस्तस्य च यत् तद्बुति कार्यम् ।। ६६ ।।**

जो कार्य से निश्चितरूपेण पूर्ववर्ती है और अन्यथासिद्ध भी नहीं, वह कारण होगा और नियमतः जो उत्तरवर्ती होगा वह कार्य होगा ।। ६६ ।।

यदनन्यथासिद्धं सत्कार्यनियतपूर्ववर्ति तत्कारणमवदन् विद्वांसः । तस्य कारणस्य नियमतो यदुत्तरवर्त्ति तत् कार्यं भवति । सकलसामग्रीसमवधाने सति नियमेनोत्तरवर्ति कार्यमिति बोध्यम् ।। ६६ ।।

**लघुनियतपूर्ववृत्तेः कार्ये संभवति तदितरत्सकलम् ।**
**कारणताचिन्तायां विविदुः कवयोऽन्यथासिद्धम् ।। ६७ ।।**

लघुधर्माद्यवच्छिन्न नियतपूर्ववर्ती से ही कार्य संभव होने से उससे अन्य सबको कारणता के विचार में अन्यथासिद्ध ही माना है ।। ६७ ।।

अनन्यथासिद्धमित्यत्रान्यथासिद्धं किमिति वीक्षायामाह—लघ्विति । नियतपूर्ववृत्तयो घटं प्रति दण्डकुलालादयः । तैरेव संभवति कार्यम् । तथा सति रासभादिकमन्यथासिद्धम् । तैर्विनापि घटकार्यसंभवात् । दण्डत्वदण्डरूपकुलापितृप्रभृतयः परम्परासम्बन्धेन सम्बद्धा इति गुरुतरत्वादन्यथासिद्धाः। महत्त्वत्त्वापेक्षयानेकद्रव्यत्वस्याणुभिन्नद्रव्यत्वात्मकस्य स्वरूपतो गुरुत्वादन्यथासिद्धत्वं प्रत्यक्षं प्रति । कारणताचिन्तायामन्यथासिद्धत्वं भवति । न हि देवत्तस्यायं घटः तं प्रति आकाशोऽन्यथासिद्ध इति भवत्युदासीनविचारसमयेऽन्यथासिद्धत्वप्रत्ययः । अन्यथा यत्र कुत्राप्यन्यथासिद्धिसत्त्वाद् देवदत्तोऽयमन्यथासिद्ध इति निरङ्कुशतया व्यवहारापत्तेः ।। ६७ ।।

**कारणतात्वमखण्डं केचन वाञ्छन्ति कार्यतात्वं च ।**
**अनुयोगितात्वमेव तु सविशेषणमेतदित्यपरे ।। ६८ ।।**

कुछ विद्वान कारणतात्व और कार्यतात्व को अखण्ड मानते हैं । नियतपूर्ववृत्तित्वत्वादि ही वे हैं ऐसी अन्य विद्वानों की मान्यता है ।। ६८ ।।

कारणतात्वं कार्यतात्वं चाखण्डं धर्मद्वयं केचन वाञ्छन्ति । अनन्यथासिद्धत्व-स्वपूर्वकालस्वाधिकरणवृत्त्यभावप्रतियोगितानावच्छेदकधर्मनिरूपितत्वाभ्यां विशिष्टानुयोगितात्वमेव तदिति परे वदन्ति । तादृशानवच्छेदकधर्मत्त्वमेव कारणत्वमिति । अन्यथासिद्धयभावयथोक्ताभावप्रतियोगित्वा-

भावोभयाश्रययत्वमित्युक्तावपि तथैव। अत्रेदं बोध्यम्। यथोक्तानुयोगिताया अतीन्द्रियबहुतरपदार्थघटिततया प्रत्यक्षत्वं न संभवति। घटकारणं मृदादीति च प्रत्यक्षमनुभूयते। न हि घटकाले पूर्वकालः, नापि पूर्वकाले घट इति न तयोरन्वितप्रत्यक्षसंभवः। मन्मते पूर्वं दण्डादि तद्व्यापारं च दृष्ट्वा ततो घटं च पश्यतः पूर्वव्यापारस्मरणपूर्वकघटदर्शनस्य दण्डनिष्ठकारणताभिव्यञ्जकत्वोपगमात्कारणताप्रत्यक्षमुपपद्यते। घटोऽयं मृत्कार्य इति च सार्वलौकिकं प्रत्यक्षमपलपितुमशक्यम्। एवं कारणमित्यनुगतप्रतीतिरप्युपपद्यते। मतान्तरे स्वत्वघटिततयाऽनुगतकारणत्वासम्भवात्कारणसामान्ये शक्तिग्रहविरहात्तद्व्यवहारोऽपि दुर्घटः स्यादिति कारणतात्वादेरखण्डतास्वीकर्तॄणामाशयः ॥ ६८ ॥

**समवायिकारणत्वं कवयोऽसमवायिकारणत्वमपि ।**
**सनिमित्तकारणत्वं जगदुस्तस्मात्त्रिधा तद्धि ॥ ६९ ॥**

समवायिकारणत्व, असमवायिकारणत्व और निमित्तकारणत्व इस प्रकार कारणत्व तीन प्रकार है ॥ ६९ ॥

समवायिकारणत्वमसमवायिकारणत्वं निमित्तकारणत्वं च कवयो वदन्ति। तस्मात्त्रिधा तदिदं कारणत्वं बोध्यम् ॥ ६९ ॥

**यत्समवेतं कार्यं तदिदं समवायिकारणं प्रथमम् ।**
**तत्रासन्नं त्वपरं निमित्तमाभ्यां परं चैव ॥ ७० ॥**

जिस ( तन्तु आदि ) में समवायसम्बन्ध से कार्य ( पटादि ) उत्पन्न हो वह समवायी कारण है। उसमें प्रत्यासन्न ( तन्तुद्वयसंयोगादि ) असमवायी कारण है। इन दोनों से पृथक् जो कारण है वह निमित्तकारण है ॥ ७० ॥

समवायसम्बन्धावच्छिन्नकार्यतानिरूपितं तादात्म्यसम्बन्धावच्छिन्नं कारणत्वं समवायिकारणत्वम्। तादृशं स्वसमवायित्वस्वसमवायिसमवेतत्वान्यतरसम्बन्धावच्छिन्नं कारणत्वमसमवायिकारणत्वम्। न च तादात्म्यसम्बन्धावच्छिन्नमित्यादिनिवेशनवैयर्थ्यम्। कार्यकारणयोरेकत्र स्थितयावश्यकत्वात्। न हि मथुरायां कपालश्चेत् काश्यां घट उत्पद्यते। एवं सति भूतले कपालश्चेद्घटः कथं कपाले स्यात्। सम्बन्धसामान्यप्रवेशे मा भूत् सर्वत्र घटोत्पत्तिरिति तादात्म्यसम्बन्धेन कारणत्वम्। तादात्म्येन कपाले कपालसत्त्वात्। एवं च विषयतासम्बन्धेन प्रत्यक्षं प्रति समवायेन चक्षुःसंयोगः कारणम्। अत्र तत्पुरुषीयत्वं कार्यकारणयोरुभयत्र प्रवेश्यम्। न हि

चैत्रचक्षुःसंयोगान्मैत्रस्य प्रत्यक्षम्। विषयः प्रातिस्विकरूपेण न प्रवेश्यः। प्रत्यक्षस्य समवायेन कार्यतास्वीकारे तत्पुरुषीयत्वं न प्रवेश्यम्। विषयस्तु प्रातिस्विकरूपेण प्रवेश्यः। यथा समवायेन घटप्रत्यक्षं प्रति घटचक्षुःसंयोगः स्वसंयुक्तमनःसंयोगेन कारणमिति। उक्तकारणद्वयभिन्नकारणत्वं निमित्तकारणत्वम्। न च तुरीतन्तुसंयोगे पटासमवायिकारणत्वं स्यात्तत एव निमित्तकारणत्वं न स्यात्। एवं ज्ञानादीनादीनामिच्छाद्यसमवायिकारणत्वं स्यादिति वाच्यम्। स्वनाशप्रयुक्तनाशप्रतियोगित्वस्यासमवायिकारणतानिरूपककार्यविशेषणत्वात्। असमवायिकारणनाशे कार्यनाशावश्यंभावात्। स्वसम्बन्धित्वनियतोत्पत्तिकत्वं वा कार्यविशेषणम्। तेन जलादिपरमाणुरूपनाशविरहेऽपि कर्मनाशेन विभागादिनाशविरहेऽपि च न क्षतिः। द्व्यणुकोत्पत्तौ सत्यामेव परमाणुरूपसम्बन्धित्वं तत्रेति न द्व्यणुकरूपस्य तन्नियतत्वहानिः। ज्ञानादौ सत्यपि न कचिदिच्छादिरिति नियतत्वनिवेशेनवारणम्। तत्तदन्यत्वप्रवेशाददोष इत्यपरे।

**स्वाभावनियतविरहप्रतियोग्यादि प्रयोजकं स्वं स्यात्।**
**तत्र प्रतियोग्यादि प्रयोज्यमित्युच्यते सद्भिः॥ ७१॥**

जिसके अभाव में जिसका अभाव नियत हो वे दो प्रयोजक और प्रयोज्य हैं॥ ७१॥

यदाभावनियताभावप्रतियोगी यः तौ प्रयोजकप्रयोज्यौ। प्रयोजकत्वादि व्यवहारः कारणादिष्वपि दृश्यते। दण्डप्रयुक्तो घटः ज्ञानप्रयुक्ता इच्छेत्यादिव्यवहारात्। ज्ञानविरहे नियत इच्छाविरहो मुक्तादौ। जलपरमाणुषु जलत्वप्रयुक्तं शैत्यम्। न हि तयोर्जन्यजनकभावः। तथापि जलत्वाभावनियतः शैत्याभाव इति तयोः प्रयोज्यप्रयोजकभावः। जलत्वाभावप्रयुक्तोऽपि शैत्याभाव इत्यत आदिपदोपादानम्। किं चाध्ययनेन वसतीत्यादौ भविष्यदध्ययनप्रयुक्तो वर्तमानवासः। तथा परमापूर्वप्रयुक्तो यागादिः। तत्र यागः पूर्वं परमापूर्वं पश्चात्। तथा च प्रयोजकप्रयोज्यभावे विद्वदनुभव एव शरणम्॥ ७१॥

**अत्र प्रयोज्यतात्वमखण्डं तद्वत्प्रयोजकत्ववत्त्वम्।**
**ताभ्यां च व्यावृत्ते प्रयोजकत्वप्रयोज्यत्वे॥ ७२॥**

प्रयोजकतात्व और प्रयोज्यतात्व अखण्ड धर्मद्वय है। उनसे प्रयोजकता और प्रयोज्यता इतरव्यावृत्त है॥ ७२॥

ननु विद्वदनुभवो वस्त्वायत्त इति मा भूदन्योन्याश्रय इत्यत आह—अत्रेति। तथा च प्रयोज्यतात्वाद्यखण्डधर्मवत्त्वमेव लक्षणमिति न काचिदनुपपत्तिः ॥ ७२ ॥

**यः कारणविरहप्रतियोगी प्रतिबन्धको भवेदेषः ।**
**कार्यं तु प्रतिबध्यं प्रतिबन्धकतादि तदुभयगम् ॥ ७३ ॥**

मणि का अभाव दाहकारण है। ऐसे कारणीभूत अभाव का प्रतियोगि मणि प्रतिबन्धक है। दाह प्रतिबध्य है। प्रतिबन्धकता आदि को इस प्रकार जानो ॥ ७३ ॥

कारणीभूताभावप्रतियोगी प्रतिबन्धकः। अभावत्वावच्छिन्ना कारणता ग्राह्या। तेन दण्डाभावाभावस्य दण्डरूपस्य घटं प्रति कारणत्वेऽपि न दण्डाभावस्य घटं प्रति प्रतिबन्धकता। दण्डाभावाभावत्वेन घटकारणत्वविरहात्। भवति च दाहं प्रति मणेः प्रतिबन्धकता। मण्यभावत्वेन दाहकारणत्वात्। मण्यभावे सत्येव दाहोत्पत्तेः। प्रतिबध्यश्च दाहादिः। तदुभयगता प्रतिबन्धकता प्रतिबध्यता च ॥ ७३ ॥

**प्रतिबन्धकतात्वादि तु केचन वाञ्छन्त्यखण्डरूपमिह ।**
**सविशेषणमपरे तज्जगदुः प्रतियोगितात्वादि ॥ ७४ ॥**

कुछ विद्वान प्रतिबन्धकतात्व और प्रतिबध्यतात्व को अखण्डधर्म मानते हैं। कारणीभूताभावप्रतियोगितात्वादि ही वे हैं ऐसा अन्य मत है ॥ ७४ ॥

मणिर्दाहं प्रतिबध्नातीत्यादिव्यवहारे मणिर्दाहानुत्पत्तिं प्रयोजयति, मणिरस्तीति दाहो नोत्पद्यते इत्येव लोकानां प्रत्ययः, न तु मण्यभावो दाहकारणमिति। मण्यभावाननुसन्धानेऽपि मणिरयमस्तीति दाहो न भवतीति प्रत्ययात्। मणिर्दाहं प्रतिबध्नातीति व्यवहाराच्च। न च यत्प्रयुक्तानुत्पत्तिप्रतियोगि कार्यं तत्प्रतिबन्धकं, तच्च प्रतिबध्यमित्यस्तु लक्षणमिति वाच्यम्। दण्डाभावप्रयुक्ता घटानुत्पत्तिरिति दण्डाभावस्यापि घटप्रतिबन्धकतापत्तेः। अनुगतप्रतित्यनुपपत्तेश्चेत्याशयवतां मतमाह—प्रतिबन्धकतात्वादीति। मा भूदनुगतप्रतीत्युपपत्तिः। अन्यथानुगतप्रतीत्यनुरोधेनेन्द्रियत्वभूतत्वमूर्तत्वादेरप्यखण्डरूपत्वं स्यादिति यथोक्तलक्षणलभ्यसविशेषणप्रतियोगितात्वादिकमेव प्रतिबन्धकतात्वादि। तत्प्रतीतिफलबलेन

च प्रतिबन्धकव्यवहारे मण्याद्यभावानुसन्धानं कल्पनीयमिति मतान्तरमाह-सविशेषणमिति ॥ ७४ ॥

**यस्य ज्ञानं विषयः स भवति विषयी निगद्यते ज्ञानम् ।**
**अर्थे तु विषयता स्याज्ज्ञाने विषयित्वमेवापि ।। ७५ ।।**

जिस ( घटादि ) का ज्ञान होता है वह ( घटादि ) विषय होता है और ज्ञान विषयी होता है । विषय घटादि में विषयता और ज्ञान में विषयिता रहती है ।। ७५ ।।

घटस्य ज्ञानमित्यत्र घटो विषयः । ज्ञानं च विषयि । विषयता घटादौ । विषयिता ज्ञाने । घटस्य ज्ञानमित्यत्र षष्ठ्यर्थो विषयविषयिभावलक्षण-सम्बन्धः । संयोगस्य स्वस्वामिभावादेर्वा तत्रासम्भवात् । न च कालिक-सम्बन्धः । जन्यसकलविषकत्वापत्तेः । ईश्वरज्ञानस्य निर्विषयत्वापत्तेश्च । ननु षष्ठ्यर्थोपपत्तये एक एव सम्बन्धोऽस्तु । तस्य प्रतियोग्यनुयोगिनौ विषयविषयिणौ स्यातामिति चेन्न । कः प्रतियोगी कोऽनुयोगीति नियामका-भावात् । न च घटस्य ज्ञानमितिवद् ज्ञानस्य घट इति प्रत्ययाभावाद् घट एव प्रतियोगी ज्ञानमेवानुयोगीति वाच्यम् । ज्ञानस्य विषयो घट इतिवद् घटस्य विषयि ज्ञानमिति प्रयोगाभावाद् विपरीतसाधनसम्भवात् । तस्मा-द्विविषयत्वविषयित्वे द्वे एव ।। ७५ ।।

**अत्रापि विषयतात्वप्रभृतिमखण्डं वदन्ति विद्वांसः ।**
**तदवच्छिन्नं तद्गतनिरूपकत्वादिकं भवति ।। ७६ ।**

यहाँ भी विषयतात्वादि अखण्ड धर्म है । विषयतादिगत निरूपकत्वादि उस विषयतात्वादि से अवच्छिन्न होता है ।। ७६ ।।

विषयतात्वं विषयितात्वं चाखण्डम् । तादृशधर्मवत्त्वं च विषयतादि-लक्षणम् ।। ७६ ।।

**प्रतियोग्यनुयोगिपदौ यौ वैशिष्ट्यस्य भासमानस्य ।**
**तत्र प्रकारताऽऽद्ये विशेष्यताऽन्त्ये विषयते ते ।। ७७ ।।**

प्रतीयमान वैशिष्ट्य ( सम्बन्ध ) का प्रतियोगी प्रकार और अनुयोगी विशेष्य होता है । उनमें प्रकारता और विशेष्यता नाम की दो विषयतायें होती हैं ।।७७।।

भासमानवैशिष्ट्यप्रतियोगिनि प्रकारता, तदनुयोगिनि विशेष्यता, ते च विषयते। न च तयोर्विषयतात्वं कुतो वक्तव्यमिति वाच्यम्। निर्विकल्पकसविकल्पकसाधारणघटत्वज्ञानस्य घटत्वविशिष्टबुद्धौ कारणत्वाद् घटत्वविषयकज्ञानत्वस्योभयत्र वक्तव्यत्वाद्। प्रकारताख्यविषयतयैवोपपत्तौ प्रकारतातिरिक्तविषयतास्वीकारे गौरवात् ॥ ७७ ॥

**शैले वह्निरिति मितौ प्रतियोग्यनुयोगिनोर्विपर्यासात्।**
**प्रोक्ते विशेष्यतात्वप्रकारतात्वे पृथगखण्डे ॥७८॥**

पर्वत में वह्नि है ऐसे ज्ञान में प्रतियोगी और अनुयोगी पर्वतो वह्निमान् के जैसे हैं किन्तु प्रकार ओर विशेष्य बदल जाते हैं। अतः प्रकारतात्व और विशेष्यतात्व अलग ही अखण्ड धर्म हैं। भासमानवैशिष्ट्यप्रतियोगितात्वादिरूप नहीं ॥ ७८ ॥

भासमानवैशिष्ट्यप्रतियोगितात्वादिकमेव न प्रकारतात्वादि। पर्वते वह्निरित्यत्र वैशिष्ट्यप्रतियोगित्वस्य वह्नावेव स्थितत्वेऽपि प्रकारतायास्तत्र विरहात्। पर्वतस्य तत्र प्रकारत्वात्। न च पर्वतवृत्तित्वमेत्र वह्नौ प्रकारः। तच्च प्रतियोगि स्वरूपसम्बन्धस्येति वाच्यम्। पर्वते संयोगेन वह्निरिति प्रतीतेः स्वरूपसम्बन्धस्य संसर्गतया तत्र भाने मानाभावात्। न हि अभिलप्यमानप्रतीयमानयोरर्थयोः सर्वत्र तुल्यत्वम्। संयोगेन वह्निप्रकारकपर्वतविशेष्यकबोधं हि पर्वतो वह्निमानित्यनेन विषयीक्रियते न त्वभिलप्यते। नामार्थयोरभेदान्वयेन वह्निमदभिन्नपर्वतस्यैव तत्र विषयत्वात्। एवं पर्वतवृत्तिवह्नेरभिलप्यमानत्वेऽपि पर्वतप्रकारकवह्निशेष्यकबोधस्य तेनोल्लेखो भवेदेव ॥ ७८ ॥

**यस्तु प्रकारताया विशेष्यतायाश्च नियमनो धर्मः।**
**तत्र प्रकारताद्यावच्छेदकता विषयता स्यात् ॥ ७९ ॥**

प्रकारता विशेष्यता आदि के नियामक ( अवच्छेदक ) धर्मों में अवच्छेदकता नाम की विषयता रहती है। जैसे वह्निमान् पर्वतः यहाँ वह्नित्व में प्रकारतावच्छेदकता है और पर्वत में विशेष्यतावच्छेदकता है ॥ ७९ ॥

प्रकारतायाश्च विशेष्यतायाश्च नियमनो धर्मः प्रकारता आद्या ययोः प्रकारताविशेष्यतयोस्तदवच्छेदकः। तत्र प्रकारतावच्छेदकता विशेष्यताव-

च्छेदकता च विषयता भवति। यथा घटवद्भूतलमित्यत्र घटनिष्ठप्रकारता घटत्वावच्छिन्ना भूतलनिष्ठाविशेष्यता च भूतलत्वावच्छिन्ना। ननु तत्र घटत्वनिष्ठप्रकारतामात्रेणोपपत्तावच्छेदकत्वं पृथग् व्यर्थमिति चेन्न। विशेष्ये विशेषणं तत्रापि विशेषणान्तरमिति रीत्या यज्ज्ञानं ततो विशिष्ट-वैशिष्ट्यबुद्धेः पार्थक्यस्य घटत्वादावच्छेदकताख्यविषयतास्वीकारेणैवो-पपत्तेः ॥ ७९ ॥

**रजतत्वं रजतवदिति बोधेऽवच्छेदकं प्रकारश्च।**
**तदवच्छिन्ना मिलिता प्रकारता तद्विशेष्यतया॥ ८० ॥**

रजतवाला ( गृहादि ) इस बोध में रजत्व अवच्छेदक भी है प्रकार भी है। अतः रजतत्वावच्छिन्नप्रकारता रजतत्वप्रकारतानिरूपितविशेष्यता से युक्त होती है ॥ ८० ॥

रजतवानयमित्यादिबोधे रजतत्वमवच्छेदकं भवति। रजतत्वेऽवच्छेद-कता प्रकारतेति द्वयमेव स्यात्। तत्र रजतत्वावच्छिन्ना प्रकारता रजते वर्तते। तथा रजतत्वनिष्ठप्रकारतानिरूपितविशेष्यता च रजते वर्तते। तत्र रजतनिष्ठा रजतत्वावच्छिन्ना प्रकारता रजतत्वनिष्ठप्रकारतानिरूपित-विशेष्यतया मिलिता भवति, न तु विशकलितरूपेण, तेन रजतं रजतवच्चेति समूहालम्बनतुल्यत्वं न भवति॥ ८० ॥

**एकभुवोर्जगुरभिदामेके तु विशेष्यताप्रकारतयोः।**
**अन्येऽवच्छेद्याच्छेदकभावं तथाऽन्योन्यम्॥ ८१ ॥**

रजत्वाच्छिन्न प्रकारता और रजतत्वनिष्ठप्रकारतानिरूपितविशेष्यता ये दोनों रजत में हैं। दोनों की एकता है ऐसा जगदीशमत है। और दोनों का अवच्छे-द्यावच्छेदक भाव है ऐसा गदाधरमत है॥ ८१ ॥

रजतवदिति बुद्धौ रजते या रजतत्वनिष्ठावच्छेदकतानिरूपिता प्रकारता या च रजतत्वनिष्ठप्रकारतानिरूपिता विशेष्यता तयोरेकभुवोः=एकाधि-करणयोरभेदमेके जगदीशाय आहुः। तथाऽन्योन्यं तयोरवच्छेद्यावच्छेदक भावमन्ये भट्टाचार्यप्रभृतय आहुः॥ ८१ ॥

**रजतं सुन्दरमत्र च निरवच्छिन्ना विशेष्यता रजते।**
**रजतत्वनिष्ठया स्यान्निरूपिता हि प्रकारतया॥ ८२ ॥**

रजतं सुन्दरं, रजतवान्, रजतं इत्यादि ज्ञान में रजत्वनिष्ठप्रकारतानिरूपित विशेष्यता निरवच्छिन्ना होती हैं। क्योंकि अवच्छेदक मानेगें तो स्वयं रजतत्व ही को अवच्छेदक मानना पड़ जायेगा ॥ ८२ ॥

रजतवदित्यत्र, रजतं सुन्दरमित्यत्र, चकारेण रजतमित्यत्र च रजतत्व-निष्ठप्रकारतानिरूपिताविशेष्यता निरवच्छिन्नाङ्गीक्रियते ॥ ८२ ॥

**रजतमिति मतौ रजतं रजतमिति यतः स्मृतिः सतां न मता ।**
**न मतावच्छेदकता स्वधर्मितायामतः स्वस्य ॥ ८३ ॥**

तब रजतं इस ज्ञान में और रजतं रजतं ऐसे आवृत्तज्ञान में फरक नहीं होगा और रजतं इस अनुभव से रजतं रजतं ऐसी स्मृति होने लगेगी। अतः स्वधर्मिता में स्वयं अवच्छेदक नहीं हो सकेगा ॥ ८३ ॥

ननु तत्र रजतत्वमेव धर्मितावच्छेदकं विशेष्यतावच्छेदकापरपर्यायं स्यात्त-त्राह-रजतमितीति। न च रजतमित्यनुभवे रजतत्वस्य द्विधा भानाभावाद् रजतं रजतमित्यत्र च द्विधा भानान्न रजतमिति मतेर्दर्शितापत्तिरिति वाच्यम्। धर्मितावच्छेदकतया प्रकारतया च द्विधा भानस्य रजतमित्यत्रापि तुल्यत्वात्। न च रजतमित्यत्र धर्मितावच्छेदकताप्रकारतयोरवच्छेद्याव-च्छेदकभावाऽस्ति, न तु रजतं रजतमित्यत्रेति वाच्यम्। तत्राप्यवच्छेद्याव-च्छेदकभावसत्त्वात्। इदं रजतं पर्वतो वह्निमानित्यादौ इदन्त्वपर्वतत्वाद्यव-च्छेदेन रजतत्ववह्न्यादिभानस्वीकारात्। एतदपि अवच्छेद्यावच्छेदकभावापन्न-विषयतान्तरमुपगम्योक्तम्। वस्तुगतिमात्रत्वे त्वापत्तिर्नितरामेव। अन्यथा-कारैक्ये आपत्तेर्विरहादापादनमशक्यं स्यात् ॥ ८३ ॥

**रजताभावे द्वेषे सति रजतत्वप्रकारिका येच्छा ।**
**तद्धेतुरियं सिद्धा ननु रजतत्वप्रकारा धीः ॥ ८४ ॥**

निरवच्छिन्न विशेष्यता ही क्यों मानना? रजतं सुन्दरं में रजतत्वावच्छिन्न एक ही विशेष्यता और रजतवान् में रजतत्वावच्छिन्न प्रकारतामात्र मान लो। नहीं, रजताभाव में द्वेष होने पर रजतत्वप्रकारक इच्छा होती है। उसके प्रति रजतत्वप्रकारक बुद्धि ही कारण है। रजतत्वावच्छिन्न बुद्धि नहीं ॥ ८४ ॥

ननु रजतं सुन्दरं रजतवदित्यादौ रजतत्वनिष्ठप्रकारतानिरूपित-विशेष्यता कुतोऽभ्युपगन्तव्या। अवच्छेदकतामात्रेणोपपत्तेरत आह—रजता-

भाव इति । रजताभावे द्वेषे रजतत्वप्रकारकेच्छा जायते । रजताभावज्ञानं प्रति च रजतत्वप्रकारकज्ञानं करणम् । तद्यदि रजतं सुन्दरमित्यादौ रजतत्वप्रकारकता न स्यात्तदा तदभावे द्वेषानुपपत्तेस्तदिच्छानुपपन्ना स्यात् । एतेन रजतवदित्यादिज्ञानं विशेष्ये विशेषणं तत्रापि विशेषणान्तरमिति रीत्या-निर्विकल्पकोत्तरमपि संभवति । रजतं सुन्दरमिति ज्ञानोत्तरं रजतमिति केवला स्मृतिर्नैव भवति । सौन्दर्यप्रमोषेऽपि रजतं किंचिदित्येवमधिकरणतावच्छेदकावच्छिन्नविषयिकैव स्मृतिर्भवति । अनुभवस्मरणयोः समानविषयत्वनियमादिति परास्तम् । निर्विकल्पकरजतत्वादिज्ञानाद्रजताभावज्ञानद्वेषाद्यनुपपत्तेः । न च प्रकारताविशेष एवावच्छेदकतेति वाच्यम् । स्वस्य स्वधर्मितावच्छेदकत्वापत्तिदोषस्योक्तत्वात् । न च प्रकारतात्वव्याप्यमवच्छेदकतात्वं धर्मान्तरं भवतु, न तु द्वे विषयते अवच्छेदकताप्रकारते इति वाच्यम् । एवमपि भवता प्रकारतात्वस्य रजतं सुन्दरमित्यत्र रजतत्वविषयतायां स्वीकारात्तन्निरूपितविशेष्यताया निरवच्छिन्नत्वस्यास्मत्प्रतिज्ञातस्य भङ्गविरहात् । रजतवदित्यादौ रजत्वनिष्ठावच्छेदकतानिरूपितत्वं प्रकारतायां, न तु रजत्वनिष्ठप्रकारतानिरूपितत्वं तत्र, प्रकारताविशेष्यतयोरेव निरूप्यनिरूपकभावात् । मतभेदेन रजतगतप्रकारताविशेष्यतयोरैक्येऽपि विशेष्यतात्वेनैव प्रकारतानिरूपितत्वं, प्रकारतात्वेनैवावच्छेदकतानिरूपितत्वमिति प्रकारतावच्छेदकतयोर्भेद आवश्यकः । अवच्छेद्यावच्छेदकभावे तु नितरामिति धर्मितावच्छेदकेऽपि अवच्छेदकताप्रकारते पृथगेव युक्ते । विशेष्ये विशेषणमिति न्यायेन रजतत्वसौन्दर्यादिनिर्विकल्पकोत्तरं सुन्दररजतमिति यद् ज्ञानं तस्मात् रजतत्वावच्छिन्नविशेष्यताकसौन्दर्यादिप्रकारकज्ञानस्य विलक्षणत्वाच्च । तत्र धर्मितावच्छेदकप्रकारकज्ञानस्य हेतुत्वात् ॥ ८४ ॥

**एषावच्छेदकता न पृथगिति परेऽपरे तु पृथगाहुः ।**
**स खलु विषयताभेदस्तत्त्वमखण्डं पृथक् चैव ॥ ८५ ॥**

इस अवच्छेदकता ( विषयतावच्छेदकता ) को कुछ विद्वान् पृथक् (अर्थात् प्रतियोगितावच्छेदकतादि पूर्वोक्त से पृथक्) नहीं मानते । दूसरे विद्वान् कहते हैं यह विषयतारूप होने से पृथक् है और अवच्छेदकतात्व भी पृथक् अखण्ड है ॥ ८५ ॥

इयमवच्छेदकता प्रतियोगितादिनिरूपकत्वेन प्राङ्निरूपितावच्छेदकतातो न पृथगिति केचिदाहुः । अपरे तु पृथगाहुः । कथम् ? स खलु

विषयताविशेषो भवति। ततश्च तत्त्वमेतदवच्छेदकतात्त्वमखण्डं पृथगेव युक्तमिति ॥ ८५ ॥

**नैव प्रकारतात्वं विशेष्यतात्वं च निर्विकल्पनुषि।**
**तत्तद्व्यापकमपरं पृथगेवेदं विषयतात्वम् ॥ ८६ ॥**

प्रकारतात्व विशेष्यतात्वादि से ही काम चलेगा पृथक् विषयतात्व क्यों मानना ? सुनो। निर्विकल्पक ज्ञान में प्रकारता आदि नहीं हैं। अथ च विषयता है। अतः विषयतात्व व्यापक अखण्ड धर्म है ॥ ८६ ॥

ननु प्रकारतात्वविशेष्ततात्वावच्छेदकतात्वादिभिरेवोपपत्तौ किमर्थं विषयतात्वं पृथक् स्वीकर्तव्यम् ? तत्राह—नैवेत्यादि ॥ ८६ ॥

**अज्ञातार्थाभिमतं भवति विधेयं विधेयता तत्र।**
**उद्देश्यं ज्ञातार्थाभिमतं चोद्देश्यता तत्र ॥ ८७ ॥**

अज्ञात अर्थ को बताना जहाँ अभिमत है वहाँ अज्ञातार्थ विधेय और ज्ञातार्थ उद्देश्य होगा। जैसे ज्ञात पर्वत में अज्ञात वह्नि कहना है वहाँ उद्देश्यता पर्वत में है और विधेयता वह्नि में है ॥ ८७ ॥

पर्वतो वह्निमानित्यादौ पर्वतं ज्ञातार्थमुद्दिश्य वह्निरज्ञातार्थो विधीयते। अज्ञातस्य पक्षत्वायोत्। ज्ञातस्य साध्यत्वायोगात्। ज्ञापनीयत्वमेव हि साध्यत्वं नाम। श्रुतस्यापि मननविधानादभिमतपदम्। अज्ञातवदिति कृत्वानुमीयते। एवं पक्षस्वरूपमयं जानातीत्यभिमत्यापि पक्षस्य प्रयोगो भवति। यथा पर्वतो वह्निमानित्युक्ते कोऽयमुद्देश्यत्वेन त्वयोच्यते पर्वत इति पृष्ट आह पश्य दूरत उच्चैर्भाग एष पर्वत उच्यत इति। तथा च ज्ञातार्थाभिमत उद्देश्यः। तयोरुद्देश्यता विधेयता च ॥ ८७ ॥

**उद्देश्यविधेयत्वे विषयत्वे केचनाथ पृथगन्ये।**
**ते तु निरूप्यनिरूपकभावापन्ने द्वयेऽपि मते ॥ ८८ ॥**

उद्देश्यत्व और विधेयत्व ये दो विषयतायें हैं ऐसे कुछ लोग मानते हैं। दूसरे उन्हें पृथक् ही कहते हैं। दोनों के मत में इन दो में परस्पर निरूप्यनिरूपक भाव तो है ही ॥ ८८ ॥

उद्देश्यत्वं विधेयत्वं च विषयताविशेषाविति सिद्धान्तवादिनां मतम्। अन्ये तु विषयतात्वधर्मरहिते पृथगेव ते इति वदन्ति। तथा हि

पर्वतो वह्निमानित्युक्ते पर्वतमुद्दिश्य वह्निमन्तं विधत्त इति प्रत्येति श्रोता। न हि तत्र ज्ञातत्वाऽज्ञातत्वे अपि। तादृशप्रतीतिसाक्षिके उद्देश्यताविधेयते विषयावेव घटादिवन्न तु विषयतारूपे। न चात्रोद्देश्यत्वादिवाचकपद-विरहात्कथमुद्देश्यत्वादिविषयकत्वं शाब्दबोधस्येति वाच्यम्। पर्वतादिपदस्यै-वोद्देश्यतादिविशिष्टपर्वताद्यर्थकत्वात्। भवतु वा संसर्गविधयोद्देश्यत्वादि-भानम्। क्वचित्संसर्गस्याप्युल्लिख्यभानमनुव्यवसाये व्यवहारे च भवति। यथा घटमानयेत्युक्ते घटकर्मतानिरूपकानयनमयं ब्रवीतीति। अथवा भवतु पार्ष्ठिक्येवोद्देश्यविधेयत्वप्रतीतिरिति। यत्तु शाब्दबोधस्थले उद्देश्यत्वविधेयत्वे न भासेते, मानाभावादिति रामरुद्रः। तदयुक्तम्। स्वर्गकामो यजेतेत्यादौ स्वर्गकामं पुरुषमुद्दिश्य यागो विधीयत इति सर्वैरुपगमाद् विरुद्धत्रिका-देरन्यथानुपपत्तेः। परन्तु विषयतातोऽत्यन्तपृथक्पदार्थान्तरकल्पनायां गौरवमिति विषयताविशेषरूपत्वमेवोद्देश्यत्वविधेयत्वयोर्युक्तमिति सिद्धान्त-वादिनामभिप्रायः ॥ ८८ ॥

**उद्देश्यतात्वमत्राखण्डं प्राहुर्विधेयतात्वं च।**
**ते हि विशेष्यविशेषणाभावानियतेर्न तद्रूपे ॥ ८९ ॥**

उद्देश्यतात्व और विधेयतात्व ये दो अखण्ड धर्म ही हैं। विशेष्यतात्व विशेषण-तात्व ही नहीं। क्योंकि पर्वतो वह्निमान्, पर्वते वह्निः इन दो में विशेष्य विशेषण भाव बदलने पर भी उद्देश्य पर्वत और विधेय वह्नि ही है ॥ ८९ ॥

ननु विशेष्यताभेदो भवतूद्देश्यत्वं, प्रकारताभेदश्च विधेयत्वमिति चेन्न। विशेष्यविशेषणभावाऽनियतत्वादुद्देश्यविधेयतयोः। पर्वतो वह्निमानित्यत्र पर्वत उद्देश्यो विशेष्यरूपः। वह्निर्विधेयः प्रकाररूपः। किन्तु पर्वते वह्निरित्यत्र तयोरेवोद्देश्यविधेयत्वेऽपि पर्वतः प्रकारो वह्निर्विशेष्यः। एवं वह्निः कुत्रेति जिज्ञासायां वह्निः पर्वत इत्यत्रोद्देश्यविधेयते विपरीते। तत्रैव वह्निमान् क इति जिज्ञासायां पर्वत इत्युत्तरं च। ततश्चोद्देश्यता विधेयता च पृथगेव। उद्देश्यतात्वं विधेयतात्वं चाखण्डधर्मौ तद्वत्त्वं तयोर्लक्षणम् ॥ ८९ ॥

**तदपि निरूप्यनिरूपकभावापन्ने परस्परं भवतः।**
**प्रतियोग्यनुयोगित्वप्रभृतियद्वत्तथा साक्षात् ॥ ९० ॥**

पर्वते वह्निः यहाँ पर्वत और वह्नि की विशेष्यता और विशेषणता साक्षात् निरूप्यनिरूपकभावान्न नहीं है। किन्तु उद्देश्यता और विधेयता साक्षात् निरूप्यनिरूपकभावापन्न है॥ ९०॥

विशेष्यताप्रकारतास्वरूपत्वविरहेऽपि दूरवर्तित्वेऽपि उद्देश्यविधेयत्वे परस्परं निरूप्यनिरूपकभावापन्ने भवतः। यथा प्रतियोगितानुयोगितादीनाम्। तथा च पर्वते वह्निरित्यत्र सप्तम्यर्थाधेयतायाः प्रकारतया भानेऽपि तद्व्यवधानेऽपि पर्वतस्योद्देश्यत्वं वह्नेर्विधेयत्वं च घटते॥ ९०॥

**पृथगुद्देश्यत्वादौ वाच्यमवच्छेदकत्वमपि तद्वत्।**
**आधारतादितुल्यं व्यत्ययतः क्वापि न तदेव॥ ९१॥**

उद्देश्यता आदि विषयता से पृथक् है तो उसमें अवच्छेदकत्व भी पृथक् होगा। जैसे आधारता आदि में। तो आधारता आदि ही उद्देश्यत्व मान लो? नहीं। जैसे वह्नि कहाँ है पूछा। उत्तर दिया—पर्वत में। वहाँ पर्वत विधेय है आधेय नहीं॥ ९१॥

उद्देश्यत्वादौ भिन्ने सति तदवच्छेदकत्वादिकमपि तदनुरूपं वाच्यम्। तथा चाधारत्वादितुल्यमुद्देश्यत्वादि। न चाधारत्वादितुल्यत्वं कुतः? आधारतादिरूपत्वमेवास्तु नेत्याह-व्यत्ययत इति। अग्निः कुत्रेति पृष्ट आह पर्वते इति। तत्र पर्वतो विधेयो वह्निरुद्देश्यः। न तु वह्निः पर्वतस्याधारः॥९२॥

**यत्राखण्डोपाधिर्जातिर्वापि स्वरूपतो भाति।**
**तत्र तु निरवच्छिन्नां प्रकारतादिं बुधा जगदुः॥ ९२॥**

जहाँ स्वरूपतः जाति या अखण्डोपाधि का भान होता है वहाँ प्रकारता आदि निरवच्छिन्न होती है॥ ९२॥

अयं गौरित्यादौ गोत्वादि स्वरूपतो भाति। तत्र प्रकारत्वविधेयत्वादिकं निरवच्छिन्नं भवति। पर्वतो वह्निमानित्यत्र प्रकारताविधेयते अवच्छिन्ने। किन्तु प्रकारतावच्छेदकताविधेयतावच्छेदकताप्रभृतिर्निरवच्छिन्ना॥ ९२॥

**उद्देश्यता तु नियतं सावच्छिन्ना विशेष्यता क्वचन।**
**एषोऽपि विशेषः स्यादुद्देश्यविशेष्ययोरपरः॥ ९३॥**

उद्देश्यता निश्चित सावच्छिन्न होती है। विशेष्यता क्वचित् निरवच्छिन्न भी होती है। यह उद्देश्यत्व की अन्य विशेषता है॥ ९३॥

उद्देश्यता नित्यं सावच्छिन्नैव ! विशेष्यता नीलोत्पलमानयेत्यादाव-वच्छिन्ना। घटत्ववानित्यादौ निरवच्छिन्ना। उद्देयता तु नित्यं सावच्छिन्नैव। एषोपि विशेष उद्देश्यविधेययोः ॥ ९३ ॥

**अत्र विशेष्यविशेषणभावप्रभृतेः प्रयोजकं मध्ये ।**
**तदुभयनिरूपणीयं संसर्गत्वाख्यविषयत्वम् ।। ९४ ।।**

विशेष्यविशेणपणभावादि के बीच में उनके प्रयोजक उनसे निरूपणीय संसर्गता नाम की भी विषयता होतो है ॥ ९४ ॥

विशेष्यताप्रकारतादिद्विकमध्ये तदुभयनिरूपणीया संसर्गताख्यविषयताप्यङ्गीक्रियते ॥ ९४ ॥

**साक्षात्तद्द्वारा च प्रकारतादिर्विशेष्यतादिश्च ।**
**भवति निरूप्यनिरूपकभावापन्नः सतामिष्टः ।। ९५ ।।**

विशेष्यता और विशेषणता आदि का साक्षात् भी निरूप्यनिरूपकभाव होता है और संसर्गता के द्वारा भी होता है ॥ ९५ ॥

संयोगेन गुणवानिति बुद्धिं संयोगेनावृत्तिर्गुण इति मतिः प्रतिबध्नाति। तत्र प्रकारतानिरूपितसंसर्गता प्रतिबध्यतावच्छेदिका। संयोगेनाधिकरणं गुण इति ज्ञानं संयोगेनानधिकरणं गुण इति, मतिः प्रतिबध्नाति। तत्र विशेष्यतानिरूपितसंसर्गता तथा। गगनवानात्मेतिमनौ गगनाविशिष्ट इति ज्ञानं प्रतिबन्धकम्। तत्र लाघवाद्गगननिष्ठप्रकारतानिरूपितात्मविशेष्यता तथा। एवं च घटवद्भूतलमित्यादौ घटनिष्ठप्रकारतानिरूपितसंयोगनिष्ठ-संसर्गतानिरूपितभूतलनिष्ठविशेष्यता वैपरीत्येन प्रकारता वा स्वीक्रियते। एवं घटनिष्ठप्रकारतानिरूपितभूतलविशेष्यता भूतलनिष्ठविशेश्यतानिरूपित घटप्रकारता च स्वीक्रियत इति ॥ ९५ ॥

**कलशवती भूरिति भुवि कलश इति च तुल्यवित्तिवेद्यतया ।**
**उभयं चोभयविषयः प्रतिबध्यत्वादि चैकधिया ।। ९६ ।।**

भूतल घटवाला है यहाँ तुल्यवित्तिवेद्यता से भूतल में घट है यह भी आता है। अतः भूतल में घट नहीं ऐसे एक ही ज्ञान से पूर्वोक्त दोनों ज्ञान प्रतिबध्य हो जाते हैं ॥ ९६ ॥

कलशवतीत्यत्र कलशनिरूपिताधिकरणत्वं भुवि साक्षात् ज्ञायते। तुल्यवित्तिवेद्यतया भूतलनिरूपिताधेयत्वं कलशे ज्ञायते। कलशाभाववती भूरित्यस्य भूतले कलशो नास्तीत्यस्य च प्रतिबन्धकं प्रतिबध्यं वा भवति ॥ ९६ ॥

**विषयाणां भेदवशाद् भिन्ना नानैव विषयताभिमता ।**
**एकाकारविषयता त्वेकैवानन्तबोधेषु ।। ९७ ।।**

विषय भेद से नानाविषयता होती है। एकाकाकार अनन्त ज्ञान में एक ही विषयता मानी जाती है ॥ ९७ ॥

घटपटादिविषयाणां भेदवशाद् भिन्ना विषयता। तत्रापि नानैव। घटवद्भूतलं भूतलवृत्ति घटः घटसंयोगि भूतलमित्यादौ सर्वत्र विषयता नानैव। घटवद्भूतलमित्याकारकेष्वनन्तबोधेष्वेकैव विषयता। घटवद्भूतलं पटश्चेत्यादि समूहालम्बनेष्वपि सैव ॥ ९९ ॥

**संसर्गस्य विषयतां येऽनुल्लेखान्न मेनिरे तेषाम् ।**
**एका घटवद्धीः स्यात्कालिकसंयोगसमवायैः ।। ९८ ।।**

कुछ लोग संसर्गात्मक विषयता नहीं मानते। किन्तु उन के मत में कपाल घटवाला है, भूतल घटवाला है इत्यादि ज्ञान में क्या फरक होगा। दो कपालों पर एक बना बनाया घट रखा। वहाँ भी कपाल घटवाला है यही ज्ञानाकार है ॥ ९८ ॥

केचित्तु संसर्गताख्यविषयतां नोपगच्छन्ति। घटवद्भूतलमित्यादौ संसर्गानुल्लेखात्। संसर्गस्य प्रतियोगितावच्छेदकत्वादिसाधारणावच्छेदकत्वेनैव प्रतिबध्यप्रतिबन्धकादिनियमोपपत्तेरिति वदन्ति। तन्न। यत्र कपाले संयोगेन कश्चिद्घटः स्थापितः अन्यत्र समवायेन घटः क्वचित्कालिकेन घटः सर्वत्र कपालो घटवानिति बुद्धेः समानाकारत्वप्रसङ्गेन विषयताभेदविरहप्रसङ्गाद्। संयोगेन घटवत्त्वज्ञानस्य समवायेन घटाभावबुद्धिप्रतिबन्धकत्वापत्तेः। न ह्युदासीनसंयोगाद्यवच्छिन्नत्वमात्रेण विषयताभेदः। अर्थेनैव विशेषो हि निराकारतयाधियामित्याचार्यवचनात्। अर्थेन विषयेण न स्वरूपसता। न च विलक्षणविषयतावगाहित्वाद् भेदः। विषयतानां घटवद्भूतलमित्यादिनानवगाहनात्। तथा सति संयोगादिना किमपराद्धम्। समानाकारविषयतैक्येन विषयतावैलक्षण्यासिद्धेश्च। तस्मात्संयोगसमवाया-

दिसंसर्गविषयतामादायैव विषयताभेदो वक्तव्यः। सा च संसर्गविषयता न प्रकारताद्यन्तर्गता भवतीति संसर्गताख्या विषयता बलादापतति ॥ ९८ ॥

**संसर्गतामुपेत्याप्यस्यावच्छेदकत्वमपरो यः।**
**नो मेने व्यावृत्तिः समवायादेः कथं तस्य ॥ ९९ ॥**

अन्य विद्वान् संसर्गता को तो मान गये। किन्तु स्वरूपतः संसर्गभान माना। संसर्गतावच्छेदकता नहीं मानी। उनके मत में भी अन्यसंसर्गव्यावृत्ति दुर्गम है ॥ ९९ ॥

भट्टाचार्यप्रभृतयस्तु संसर्गतामुपेत्यापि संसर्गतावच्छेदकत्वाख्यविषयत्वं न मेनिरे, स्वरूपत एव संसर्गस्य भानात्। तदपि न युक्तम्। न हि द्रव्यत्वेन घटावगाहिन्या द्रव्यत्वेन पटावगाहिन्याश्च द्रव्यवद् भूतलमिति ज्ञानयोर्विषयताभेदो भवति। आकारैक्यात्। घटत्वपटत्वयोर्व्यावर्तकयोस्तत्राभावात्। एवं संयोगसमवायादेः स्वरूपतो भाने संसर्गत्वेन वा भानेऽपि आकारभेदविरहेण विषयताभेदो दुर्घटः स्यादिति स एव दोषः प्रसज्यते। तस्माद् संसर्गवत्संसर्गावच्छेदकमपि तत्र भासत इत्यवश्यं वक्तव्यम्। तत्रावच्छेदकता न प्रकारतादिरूपा। नापि संसर्गतारूपेति पृथगेव संसर्गतावच्छेदकताख्यविषयता। परम्परासम्बन्धे बह्व्योऽवच्छेदकताः स्युः ॥ ९९ ॥

**संसर्गतात्वमत्रावच्छेदकतात्वमप्यखण्डं स्यात्।**
**व्यावर्त्यं संसर्गत्वादिकमेतैर्यथायोग्यम् ॥ १०० ॥**

इस विषयतारूपसंसर्गता एवं अवच्छेदकता में अखण्डसंसर्गतात्व तथा अवच्छेदकतात्व पृथक् है। व्यावर्त्य भी यथायोग्य हैं ॥ १०० ॥

इत्थं च संसर्गतात्वं संसर्गतावच्छेदकतात्वं चाखण्डमेव स्वीकार्यम्। एतैरिति। बहुवचनं संसर्गतावच्छेदकस्य ग्रहणार्थम्। तथा च संयोगत्वाद्यवच्छिन्नतया संसर्गतानां व्यावृत्तिः। विषयताभेदस्तु संयोगत्वादिनिष्ठविलक्षणावच्छेदकताख्यविषयताबलात्। प्रकारताप्रकारतावच्छेदकतादितो व्यावृत्तिस्तु तत्तदखण्डधर्मेण। मतान्तरमग्रे प्रदर्शयिष्यामः ॥ १०० ॥

**ज्ञानगतहेतुतादौ प्रोक्ताऽवच्छेदिका विषयतैषा।**
**नानारूपा तदवच्छेदकधर्मोऽपि तद्वत् स्यात् ॥ १०१ ॥**

ज्ञाननिष्ठ कारणता एवं प्रतिबन्धकता आदि में नानारूप यह विषयता अवच्छेदक होती है। और उसका अवच्छेदक धर्म भी नानारूप है ॥ १०१ ॥

ज्ञानेति। ज्ञानत्वावच्छिन्नकारणत्वप्रतिबन्धकत्वादावेषा-पूर्वनिरूपिता नानारूपा-प्रकारताविशेष्यतादिभेदभिन्ना विषयता स्यादवच्छेदिका। तत्तद-वच्छेदकधर्मोऽपि तद्वत्-नानारूपः स्यात्। तथाहि—पर्वतो वह्निमानित्य-नुमितिं प्रति वह्निव्याप्यधूमवान् पर्वत इति परामर्शरूपं ज्ञानं कारणम्। तत्र पर्वते विशेष्ये धूमः प्रकारः, धूमे विशेष्ये व्याप्तिः प्रकारः, व्याप्तौ विशेष्यायां वह्निः प्रकारः। तत्र व्याप्तिधूमयोः प्रकारत्वविशेष्यत्वोभयम्। तथा च जगदीशतर्कालंकारमते वह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्य-त्वाऽभिन्ना या व्याप्तित्वाच्छिन्नप्रकारता तन्निरूपितविशेष्यत्वाभिन्ना या धूमत्वावच्छिन्नप्रकारता तन्निरूपितपर्वतत्वावच्छिन्नविशेष्यताकज्ञानत्वा-वच्छिन्ना भवति परामर्मनिष्ठकारणता। गदाधरभट्टाचार्यमते सा कारणता वह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नव्याप्तित्वावच्छिन्नप्रकार-तानिरूपितविशेष्यत्वाच्छिन्नधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छि-न्नविशेष्यताकज्ञानत्वावच्छिन्ना भवति। अत्र वह्नित्वे व्याप्तित्वे धूमत्वे पर्वतत्वे चावच्छेदताख्या विषयता स्वीक्रियते। सर्वासु चासु विषयतासु कारणतावच्छेदकता वर्तते। इत्थं चैवं वक्तव्यं—साध्यतावच्छेदकनिष्ठा-वच्छेदकतानिष्ठावच्छेदकतानिरूपितप्रकारतानिष्ठावच्छेदकतानिरूपितविशेष्य-तानिष्ठावच्छेदकतानिरूपिता या व्याप्तित्वनिष्ठावच्छेदकतानिष्ठावच्छेदकता-निरूपितप्रकारतानिष्ठावच्छेदकता, तन्निरूपितपिशेष्यत्वनिष्ठावच्छेदकतानि-रूपिता या हेतुतावच्छेदकनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपितप्रकारता-निष्ठावच्छेदकता तन्निरूपिता या पक्षतावच्छेदकनिष्ठावच्छेदकतानिष्ठावच्छे-दकतानिरूपितविशेष्यत्वज्ञानत्वोभयनिष्ठा, निरूपकत्वघटितसामानाधिकरण्य-सम्बन्धावच्छिन्नविशेष्यत्वनिष्ठतादृशनिरूपितावच्छेदकतानिरूपितज्ञानत्व-निष्ठा वा अवच्छेदकता तन्निरूपिता भवति पक्षतावच्छेदकावच्छि-न्नोद्देश्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नविधेयताकानुमितिकारणतेति। साध्यतावच्छेदकं प्रतियोगितायामवच्छिन्नत्वसम्बन्धेन भासते। न तु साध्यतावच्छेदके प्रतियोगितावच्छेदकत्वं विशेषणतया भासते मानाभावात्। ये तु तस्यापि विशेषणतया भानं मन्यन्ते तेषां मते तु साध्यतावच्छेदके प्रतियोगितावच्छेदकत्वं तत्र विषयतावच्छेदकत्वं तत्र कारणतावच्छेदकत्व-मिति साध्यातवच्छेदकनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकता-निरूपितप्रतियोगित्वनिष्ठप्रकारतानिष्ठावच्छेदकतेत्यादि परिष्कार्यम्। प्रतियोगित्वादेः शब्दतोऽनुल्लेखेऽपि शब्दामिलप्यमानार्थसमानविषय-

कत्वनियमस्य प्रतीतेर्विरहात् । अन्यथा वह्नित्वावच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकत्वं पर्वतो वह्निमानित्यनुमितेर्न स्यात् । नामार्थयोरभेदान्वयनियमेन वह्निमत्त्वावच्छिन्नतादात्म्यसम्बन्धावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताया एव पर्वतो वह्निमानितिशब्दजन्यबोधे भानादित्युक्तं प्राक् । न च वह्नित्वाद्यवच्छिन्नप्रतियोगिताकत्वसंसर्गेण वह्निविशिष्टाभाव एव वह्न्यभावादिपदार्थ इति वाच्यम् । शाब्दबोधस्थले नामार्थभेदान्वयनियमाद् वह्निपदस्य वह्नित्वावच्छिन्नप्रतियोगिताकार्थलक्षणाऽऽवश्यकत्वात् । किं च महानसीयवह्निरपि वह्निरेवेति महानसीयवह्नित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्निविशिष्टाभावः पर्वते वर्तत इति तस्य वारणं कथं स्यात् । तस्मात् साध्यतावच्छेदकादिनिष्ठा प्रकारतावच्छेदकता प्रतियोगित्वादिनिष्ठा प्रकारतादिश्चोपगन्तव्येति । सर्वत्र च संसर्गता यथायोग्यं निवेश्या । एवं ह्रदो वह्निमानित्यनुमितौ वह्न्यभाववान् ह्रद इति ज्ञाननिष्ठा या प्रतिबन्धकता तस्यामवच्छेदकं निरूपणीयम् । यद्विषयकत्वावच्छिन्ना ज्ञाननिष्ठाऽनुमिति प्रतिबन्धकता तत्त्वमिति हेत्वाभासलक्षणानुसारेण वह्न्भाववद्ध्रदविषयकत्वाच्छिन्नत्वादनुमितिप्रतिबन्धकतायाः ।

ननु वह्निमान् धूमादित्यत्र वह्न्यभाववान् पर्वत इति भ्रममादायातिव्याप्तिवारणाय यद्रूपावच्छिन्नविषयकत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वमिति लक्षणं वक्तव्यम् । तथा च वह्न्यभाववत्पर्वतत्वाऽप्रसिद्ध्या तदवच्छिन्नविषयकत्वमादाय नातिव्याप्तिः । ह्रदो वह्निमानित्यत्र वह्न्यभाववद्ध्रदत्वावच्छिन्नपिषयताया अनुमितिप्रतिवन्धकतावच्छेदकत्वात्तदवच्छेदकवह्न्यभाववद्ध्रदत्वमादाय लक्षणसमन्वय इति हि प्रक्रिया । किन्तु पूर्वदर्शितरीत्या न कापि विषयता वह्न्यभाववद्ध्रदत्वावच्छिन्ना । न हि वह्न्यभाववद्ध्रदत्वादिकं जातिरखण्डोपाधिर्वा । तथा च निरूप्यनिरूपकभावापन्नवह्नित्वाद्यवच्छिन्नप्रकारताविशेष्यतादेरेव प्रतिबन्धकतावच्छेकत्वात्तदवच्छेदकानां वह्नित्वाभावत्वपर्वतत्वादीनां प्रसिद्धत्वात्तान्यादायातिव्याप्तिः । न च वह्न्यभावपर्वतयोः संसर्गस्यापि भासमानत्वान्नातिव्याप्तिरिति वाच्यम् । यतस्तावता कथं नातिव्याप्तिः तादृशसांसर्गिकविषयतावच्छेदकस्वरूपसम्बन्धत्वादेरपि प्रसिद्धत्वात् । वह्न्यभाववान् ह्रद इत्यनुमितौ प्रतिबन्धकीभूत भ्रमे ह्रदो वह्निमानित्याकारके संयोगत्वस्य सांसर्गिकविषयतावच्छेदकत्वेन सुप्रसिद्धेश्चेति । यत्तु भ्रमस्थले संसर्गो न भासते । न चैवं वह्नि-

मान् ह्रद इति ज्ञानस्य वह्निर्ह्रद इति समूहालम्बनादविशेषापत्तिरिति वाच्यम्। निरूप्य-निरूपकभावापन्नप्रकारताविशेष्यतयोरेकत्र सत्त्वेनापर-वैलक्षण्यात्। तथा च यत्संसर्गप्रतियोग्यनुयोगिविषयकत्वेन ज्ञानस्यानुमिति-प्रतिबन्धकत्वं तत्संसर्गविशिष्टस्य लक्षणत्वान्नातिव्याप्तिरिति। तदसत्। वह्निमान् पर्वत इत्यत्रैव वह्निमान् ह्रद इत्यत्रापि मतुपा संसर्गोल्लेखात्। संसर्गमन्तरा प्रकारताविशेष्यतातदीयनिरूप्यनिरूपकभावाद्यनुपपत्तेश्चेति चेत्। अत्रोच्यते। वह्निमान् ह्रद इत्यादिप्रतिबन्धकज्ञाने भासमानसंसर्गः वह्निप्रतियोगिकत्वह्रदानुयोगित्वसंयोगत्वैतन्त्रितयधर्मेणैव भासते। अन्यथा वह्निः संयोगः ह्रद इति समूहालम्बनाद् वैलक्षण्यानुपपत्तेः। यथोक्तत्रितय-रूपविशिष्टश्च संयोगोऽप्रसिद्ध इति तद्घटितरूपाऽप्रसिद्धेर्नातिव्याप्तिः। तद्रूपावच्छिन्नवत्त्वमिति परिष्करणीयत्वात्। भट्टाचार्यास्तु विशिष्टबुद्धौ संसर्गभानेऽपि संसर्गतावच्छेदकभानं नाभ्युपजग्मुः। तदभ्युपगमे केन सम्बन्धेन संसर्गतावच्छेदकता संयोगत्वादेरिति तत्रापि सम्बन्धान्तरप्रवेशेऽनवस्थादौस्थ्यात्। कथं तर्हि वह्निमान् ह्रद इत्यादेर्भ्रमत्वं हेत्वाभास-लक्षणातिव्याप्तिवारणं वा कथमिति चेत्। वस्तुतो वह्निप्रतियोगिकह्रदानु-योगिकसंयोगसंसर्गस्याऽप्रसिद्धत्वात्। न चैवमलीकत्वेन तस्य प्रतीतिरपि न स्यात्। तथा च प्रतिबन्धकतावच्छेदकविषयता वह्निह्रदयोरेवेति तदवच्छेदकवह्नित्वह्रदत्वे आदायातातिव्याप्तिर्दुर्वारा स्यादिति वाच्यम्। असतोऽपि संसर्गताख्यविषयतोपगमात्। न च सदुपरागेणाप्यसतः संसर्ग-मर्यादया भानस्य मणिकृताऽनङ्गीकारान्नासद्भानस्वीकारसंभव इति वाच्यम्। अनवस्थाभयेनालीकभानोपगमौचित्यात्। तथा च शास्त्रान्त-रकारा अप्याहुः—शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति। अस्माकं तु संसर्गतयाऽलीकभानमिति विशेषः। न चैवं तेन सम्बन्धेन तदभाववति तेन सम्बन्धेन तद्वत्त्वप्रकारकज्ञानं भ्रम इति लक्षणं न घटेत। अलीक-सम्बन्धावच्छिन्नप्रतियोगिताकाऽभावाऽप्रसिद्धेरिति वाच्यम्। तेन सम्ब-न्धेन तदभाववति तदितरसम्बन्धानवच्छिन्नप्रकारताकज्ञानं भ्रम इति लक्षणसंभवात्। अथवा यत्सम्बन्धावच्छिन्नयद्धर्मावच्छिन्नप्रकारताक-यद्धर्मावच्छिन्नविशेष्यताकज्ञानस्यानुमितिप्रतिबन्धकत्वं तत्सम्बन्धेन तद्धर्मा-वच्छिन्नविशिष्टतद्धर्मावच्छिन्नवत्त्वमिति हेत्वाभासलक्षणमस्त्वति न काप्य-नुपपत्तिरिति दिक्॥ १०१॥

**यस्तु विशिष्टानुभवस्तत्र निदानं विशेषणज्ञानम् ।**
**तन्निर्विकल्पकं चेत् काचन तस्मिन् विषयता स्यात् ।। १०२ ।।**

यह घट है। इस प्रकार के घटत्वविशिष्टघटानुभवादि में विशेषणज्ञान कारण है। वह निर्विकल्पक हो तो उस में प्रकारता आदि से विलक्षण विषयता होगी ।। १०२ ।।

विषयतैषा नानारूपेत्युक्तमेव निदर्शयति-यस्त्विति। विशिष्टवुद्धि प्रति विशेषणज्ञानं कारणम्। घट इति विशिष्टवुद्धौ घटत्वस्य निर्विकल्पकं ज्ञानं प्रायः कारणम्। घट इति विशिष्टवुद्धिघटत्वविषयतामादायापि द्वितीय-विशिष्टवुद्धिसंभवाद् निर्विकल्पकं चेदित्युक्तम्। यत्र पूर्वं निर्विकल्पकं तत्र काचन विलक्षणा प्रकारतादिभिन्ना कारणतावच्छेदिका स्यात् ।। १०२ ।।

**अवगाहतेऽनुभूतिर्या नाम तु तद्विशिष्टवैशिष्टयम् ।**
**तत्र विशेषणतावच्छेदकधर्मप्रकारा धीः ।। १०३ ।।**

विशिष्टवैशिष्ट्यावगाही घटवान् इत्यादि बुद्धि में विशेषणतावच्छेदक घटत्वादि प्रकार वाला ज्ञान कारण है। वहाँ अवच्छेदकता प्रकारता आदि विषयता है ।। १०३ ।।

निदानमित्यनुवर्त्तते। विशिष्टवैशिष्ट्यावगाहिन्यां घटवान् दण्डिमा-नित्याद्यनुभूतौ विशेषणताऽवच्छेदकप्रकारकज्ञानं कारणम्। तत्र कारणता-वच्छेदकं प्रकारत्वावच्छेदकत्वादिरूपं विषयत्वम् ।। १०३ ।।

**तत्र परम्परया स च धर्मो भासेत परमधर्मिणि हि ।**
**न विशेष्ये तु विशेषणमत्रान्यविशेषणं या धीः ।। १०४ ।।**

विज्ञिष्टवैशिष्ट्यावगाही 'घटवान्' 'दण्डिमान्' इत्यादि ज्ञान में परम्परा सम्बन्ध से घटत्व दण्डत्वादिका अन्तिम आधार भूतलादि में भी भान होता है। विशेष्य में विशेपण, विशेपण में विशेषणान्तर ऐसे ज्ञान में नहीं होता ।। १०४ ।।

तत्र-विशिष्टवैशिष्ट्यावगाहिनि दण्डिमद् भूतलमित्यादिज्ञाने दण्डत्व-दण्डादिरूपविशेषणतावच्छेदकादिधर्मः परम्परया-स्वाश्रयाश्रयत्वादि-सम्बन्धेन परमधर्मिणि-चरमधर्मिणि भूतलादावपि भासते। किन्तु विशेष्ये विशेषणं तत्रापि विशेषणान्तरमिति रीत्या या धीर्दण्डत्वादिकमवगाहते तत्र न परम्परया भासत इति पूर्वतोऽनुवर्त्त्य व्याख्येयम्। दण्डत्वदण्डपुरुष-भूतलादीनां युगपच्चक्षुःसंन्निकर्षण निर्विकल्पज्ञाने द्वितीयक्षणे दण्डिमानिति-मतिस्तथा। दण्डादेः प्रकारतया भानप्रयोजकतज्ज्ञानसत्त्वात् ।। १०४ ।।

**गुणभेदयुक्तसत्तायुतगुणबुद्धिर्भवेद् भ्रमः प्रथमे ।**
**भवति प्रमा द्वितीये सत्त्वे गुणभेदसत्त्वेन ।। १०५ ।।**

विशिष्टवैशिष्ट्यावगाही हो तो गुणकर्मान्यत्वविशिष्टसत्तावान् गुणः यह ज्ञान भ्रम होगा । विशेष्ये विशेषणं इत्यादिरीति हो तो प्रमा होगा ।। १०५ ।।

एतयोरुभयोरपरं वैलक्षण्यमाह—गुणेति । गुणे गुणभेदविरहाद् गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति विशिष्टवैशिष्ट्यावगाहिज्ञानं भ्रमः । गुणे या सत्ता तत्र गुणभेदसत्त्वाद् द्वितीयस्थले प्रमा ।। १०५ ।।

**पर्याप्तिः सम्बन्धो भवति व्यासज्यवृत्तिधर्माणाम् ।**
**तस्यानुयोगितायां संख्यावच्छेदिका प्रायः ।। १०६ ।।**

पर्याप्ति नाम का सम्बन्ध व्यासज्यवृत्तिधर्मों ( दो तीन आदि वस्तुओं में एक साथ रहनेवाले धर्मों ) का होता है । उसकी अनुयोगिता की अवच्छेदिका संख्या होती है ।। १०६ ।।

उभयत्वमुभयत्र पर्याप्तं न त्वेकत्रेति प्रत्ययाद् व्यासज्यवृत्तिधर्माणामुभयत्वादिनां पर्याप्तिः सम्बन्धः । तदनुयोगितावच्छेदकं प्रायः संख्या भवति । द्वित्वादिपर्याप्त्यनुयोगितावच्छेदकं न स्वयमेव द्वित्वमित्याशयेनाह—प्राय इति । तथा च द्वावित्यादौ निरवच्छिन्नैवानुयोगिता । क्वचित्त्वपेक्षाबुद्धिविषयतैव तथा स्यात् । न हि महानसीयत्ववह्नित्वादेर्जात्यादिरूपत्वात्तन्निष्ठानुयोगितावच्छेदकं संख्या भवितुमर्हति ।। १०६ ।।

**यदवच्छेदकतादेः पर्याप्ति संवदन्ति विद्वांसः ।**
**एकत्वमपि च तस्मात्तत्रावच्छेदकं मान्यम् ।। १०७ ।।**

अवच्छेदकता आदि का पर्याप्ति सम्बन्ध माना है । अतः एकत्व भी अवच्छेदक होगा । जैसे वह्नित्वगत प्रतियोगितावच्छेदकता का अनुयोगितावच्छेदक वह्नित्वगत एकत्व है । महानसीयत्ववह्नित्व उभयगत प्रतियोगितावच्छेदकता का अनुयोगितावच्छेदक महानसीयत्व वह्नित्व उभयगत द्वित्व है । इत्यादि ।। १०७ ।।

न केवलमुभयत्वादेरेव पर्याप्तिः । किन्त्ववच्छेदकत्वादेरपि पर्याप्तिसम्बन्धोऽस्तीति विदुषां संवादः । यद् यस्मादेवं विद्वांसः संवदन्ति तस्मादेकत्वमपि पर्याप्त्यनुयोगितायामवच्छेदकं मन्तव्यम् । अन्यथा तत्संवादेनापीष्टाऽसिद्धेः । तथा हि वह्निमान् धूमादित्यादौ महानसीयवह्न्यभाव-

मादायाव्याप्तिः प्रसज्यते। न हि तद्वारणं साध्यतावच्छेदकेतरधर्मानवच्छिन्नत्वनिवेशेन कर्तुं युक्तम्। वह्नित्वस्यापि वह्नित्वघटोभयं नेति भेदसत्त्वेन साध्यतावच्छेदकेतरत्वात्। तत्र निवेशान्तरेऽनवस्थापत्तेः। तस्मात् साध्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकं यत्प्रतियोगितावच्छेदकतापर्याप्त्यनुयोगितावच्छेकं तत्प्रतियोगिताकाभावः साध्याभाव इति परिष्करणीयम्। महानसीयवह्निर्नास्तीतिप्रतीतिसिद्धाभावे, प्रतियोगितावच्छेदकता महानसीयत्वे वह्नित्वे च तदनुयोगितावच्छेदकं महानसीयत्ववह्नित्वगतद्वित्वम्। साध्यतावच्छेदकता तु केवलवह्नित्वे इति तदनुयोगितावच्छेदकं न द्वित्वं, किन्तु वह्नित्वगतैकत्वमिति न दोषः। किन्तु एवं दोषपरिहारस्तदैव संभवति यदि एकत्वमपि पर्याप्त्यनुयोगितावच्छेदकं स्वीक्रियेत। तदस्वीकारे तु निर्वचनं दुष्करं स्यात्। अत्रेदं बोध्यम्। महानसीयवह्निर्नास्तीत्यभावीयप्रतियोगितावच्छेदकता महानसीयत्वे वह्नित्वे च वर्तते। तत्र वह्नित्वगतावच्छेदकतामादाय तत्पर्याप्त्यनुयोगितावच्छेदकमेकत्वं ध्रियेतेति पुनरव्याप्तिदोषः। तद्वारणायेतरवारकपर्याप्तिः प्रवेश्या। सा च प्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपनिवेशेन। तादृशावच्छेदकतात्वावच्छिन्नपर्याप्तिरुक्तस्थले द्वित्वपर्याप्तिरेव। एवं विषयतया महानसीयवह्निसाध्यकस्थले साध्यतावच्छेदकोभयान्तर्गतवह्नित्वगतावच्छेदकतामादाय दोषवारणाय न्यूनवारकपर्याप्तिरपि प्रवेश्या। सा च साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकेति विवेशात्। क्वचिन्न्यूनवारकपर्याप्तिरेवोपयोगिनी। क्वचिदितरवारिकैव। उभयपर्याप्तेरावश्यकत्वे तूभयत्रावच्छेदकतात्वावच्छिन्नप्रतियोगिताकत्वादिकं निवेश्यम्। तथा च तस्येदं स्वरूपं-साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगितावच्छेदकीभूतावच्छेदकतात्वावच्छिन्ननिरूप्यतानिरूपितनिरूपकताकप्रतियोगिताकाभावत्वं साध्याभावत्वमिति। एवमन्यत्र॥ १०७॥

**जन्यानुयोगिकः समसमयभवस्याखिलस्य सम्बन्धः।**
**कालानुयोगिको वा कालिकयुक्ता विशेषणता॥ १०८॥**

समकालिक वस्तुओं का जन्यानुयोगिक और कालानुयोगिक सम्बन्ध कालिकविशेषणता सम्बन्ध है। ह्रदकाले वह्निः ऐसी प्रतीति होती है। ह्रदकाल ह्रद से अतिरिक्त नहीं है। अतः ह्रद में कालिकेन वह्नि रहती है॥ १०८॥

कालिकविशेषणत्वं लक्षयति-जन्येति। जन्यानुयोगिकः समकालीनस्य सर्वस्य जगतः सम्बन्धः कालिकविशेषणता। नित्येषु कालिकायोगाज्जन्येति। घटकाले धूम इति प्रतीतिः सर्वसाधारणी। घटकालश्चोपाधिभूत घटान्नातिरिक्तः कश्चित् पदार्थान्तरविशेष इति घटे कालिकेन धूमो वर्तत इति व्यपदिश्यते नैयायिकादिभिः। नित्ये महाकाले जगतः सत्त्वादाह—कालानुयोगिको वेति। वाकारः समुच्चये। तथा च तदन्यतरत्वं लक्षणम्। अथवा कालोपाधित्वेन जन्यानामपि कालत्वादेकमेव लक्षणम्। वाकारः पूर्वत्यागार्थः। कालिकसम्बन्धत्वं संसर्गत्वव्याप्याखण्डधर्मविशेषः ॥ १०८ ॥

**दैशिकविशेषणत्वं देशे स्यात् प्राचि दिश्युदेति रविः।**
**काश्मीरे सौन्दर्यं काव्यं चेद्‍धियो हेतुः ॥ १०९ ॥**

देश में दैशिकविशेषणतासम्बन्ध से वस्तु रहती है। पूर्वदिशा में सूर्य उदय होता है, काश्मीर में सौन्दर्य तथा काव्यकला विशेषरूप से है इत्यादि सम्बद्धबुद्धि दैशिकविशेषणता से होती है ॥ १०९ ॥

दैशिकविशेषणत्वं निरूपयति—दैशिकेति। प्राचि सूर्य उदेति, काश्मीरे सौन्दर्यं, काश्मीरे काव्यमित्यादौ दैशिकविशेषणतासम्बन्धो विषयः। सोऽव्याप्यवृत्तिरित्येके। काश्मीरे श्रीनगरे विद्वांसो, न पञ्चतरण्यामित्यादावव्याप्यवृत्तित्वप्रतीतेः। परे तु काश्मीरदेशवृत्तिश्रीनगरे विद्वांस इत्यर्थोपगमान्नाव्याप्यवृत्तित्वम्। न चैवं वृक्षवर्तिशाखायां कपिसंयोग इत्यत उपपत्तौ शाखादेरवच्छेदकत्वं न स्यादिति वाच्यम्। अवयविनोऽवयवानधिकरणत्वात्। न हि काश्मीरादिरेकोऽवयवी। जलादिविभक्तनानाप्रदेशरूपत्वात्। अन्यथा कृत्स्नाया पृथिव्या एकावयवित्वापत्तेः। काश्मीरादिषु पृथक्स्थितप्रस्तरखण्डादेरपि काश्मीरान्तर्गतत्वाच्च। न हि काश्मीरीय प्रस्तरखण्डस्थितः पुरुषः काश्मीरे न तिष्ठतीति शक्यं व्यवहर्तुम् ॥ १०९ ॥

**अपरेऽभावादीनां तमिमं जगदुः स्वरूपसम्बन्धम्।**
**स पुनरनेकविधः स्यात् प्रतियोग्यनुयोगिभेदेन ॥ ११० ॥**

दूसरे विद्वानों की मान्यता है कि घटाभावादि का भूतलादि के साथ जो स्वरूपसम्बन्ध है वही दैशिकविशेषणता है। वह प्रतियोगी-अनुयोगीभेद से नाना है ॥ ११० ॥

पूर्वमते अभावादीनां स्वरूपसम्बन्धः पृथग्वक्तव्यः स्यात्। तस्यैव दैशिकविशेषणत्वरूपत्वमिति मतमाह—अपर इति। अपरे विद्वांसः तमिममिति विधेयप्रधानतया पुंलिङ्गनिर्देशः। दैशिकविशेषणत्वं यदुक्तं स स्वरूपसम्बन्ध एव न त्वतिरिक्ति इति जगदुः। सः—स्वरूपसम्बन्धः प्रतियोग्यनुयोगिनोर्नानात्वेन नानाविधः। भूतलेऽभावोऽभावीयविशेषणताविशेषसम्बन्धेन। अधिकतरणत्वप्रतियोगित्वजातित्वसमवायत्वादीनां तत्तदीयविशेषणताविशेषसम्बन्धेन तत्र तत्र वृत्तिता। तत्तत्कालविशिष्टतत्तद्देशादेरभावीयसम्बन्धत्वाद्दैशिकत्वप्रसिद्धिरत्रोपपादनीया। जात्यादीनां देशत्वविरहेऽपि भाक्तस्तत्र प्रयोगः स्यात्। जातौ गुणत्वं नास्तीत्यादिप्रतीतेरभावीयविशेषणताया अपि तत्रोपपादनीयत्वात्तथैव जातित्वादिविशेषणताया अप्युपपादनसंभवात्। अत्र मते काश्मीरे सौन्दर्यमित्यादौ काश्मीरपदस्य काश्मीरवर्तिजनादिपरत्वात् प्राचि सूर्य इति प्राग्देशावच्छिन्नाकाशपरत्वाच्चोपपत्तिः। आकाशे सूर्य इति प्रतीतेः सत्त्वात्। न चैवं दिक्पदार्थवैयर्थ्यं, दूरे घट इत्यादेर्बहुतरपदार्थव्यवधानोत्तरभूतलादौ घट इत्याद्यर्थसंभवादिति वाच्यम्। व्यवधानतदानन्तर्यादेर्दिक्पदार्थघटितत्वात्। एकस्मिन्नेव घटे कोटिशः परमाणुसत्त्वेन तद्व्यवहितेऽप्यन्यथा दूरत्वव्यवहारापत्तेः। यथैव कालिकानन्तर्यादि कालेन विना न संभवति तथा दैशिकानन्तर्यादिकमपि न देशेन विना संभवितुमर्हति ॥ ११० ॥

**कालिकमानन्तर्यं स्वध्वंसाधारकालवृत्तित्वम्।**
**दैशिकमेतत् स्वाना-धारप्रागादिवृत्तित्वम् ॥ १११ ॥**

कालिक अनन्तरता स्वकालध्वंसाधिकरण में वृत्तित्व है। और दैशिक अनन्तरता अपने अनधिकरण पूर्वादि दिशा में वृत्तित्व है ॥ १११ ॥

स्वरूपसम्बन्धस्य दैशिकविशेषणत्वप्रवादो यथा तथा वाऽस्तु। वस्तुतस्त्वसौ पृथगेव। पृथगेव च दैशिकविशेषणत्वमित्याशयेनाह—कालिकमिति। देवदत्तादनन्तरो यज्ञदत्तः, खण्डनकारादनन्तरो मणिकार इत्यादौ स्वध्वंसाधिकरणकालवृत्तित्वं स्वाधिकरणकालध्वंसाधिकरणकालवृत्तित्वं वाऽऽनन्तर्यम्। देवदत्ते जीवत्येव किंचित्कालानन्तरजन्मनि यज्ञदत्ते आनन्तर्यव्यवहारसिद्ध्यर्थं द्वितीयलक्षणम्। अव्यवहितानन्तर्यं तु स्वक्षणध्वंसाधिकरणकालध्वंसानाधिकरणत्वे सति स्वाधिकरणकालध्वंसाधिकरणत्वम्।

स्वक्षणध्वंसो द्वितीयक्षणे तद्ध्वंसस्तृतीयक्षणे तदनधिकरणं सत् स्वक्षणध्वंसाधिकरणं द्वितीयक्षण एवेति तद्वृत्तेरव्यवहितानन्तर्यम्। दैशिकम् एतत् = आनन्तर्यं स्वानधिकरणप्रागादिदेशवृत्तित्वम्। अव्यवहितानन्तर्यं तु स्वानधिकरणप्रागादिवृत्तिर्यः स्वसमानजातीयस्तदनधिकरणप्रागाद्यवृत्तित्वे सति स्वानधिकरणप्रागादिवृत्तित्वम्। प्रागादयश्च प्रतिव्यक्ति भिन्नाः। यस्य पुरुषस्य प्रागादिदेशः पुरुषान्तरं प्रति तस्य प्रत्यक्त्वादिदर्शनात्। मथुरायाः प्राक् काशी पाटलिपुत्रात् प्रत्यगिति। तथा च विवक्षिततत्तद्व्यक्तिनिरूपित उदयाचलाभिमुखदेशः प्राक्। अस्ताचलावच्छिन्नदेशः प्रत्यक्। उदयाचलाभिमुखस्य वामदेशावच्छिन्न उदक्। दक्षिणदेशावच्छिन्नोऽवाक् इति निर्वचनीयम्। एवं प्रदिशोऽपि बोध्याः। तत्रैकैकां प्रागादिदिशमादायानन्तरत्वादयो निर्वक्तव्याः। अन्यथा स्वानधिकरणप्रागादिदेशवृत्तिघटाद्यनधिकरणोदग्वृत्तेः पटादेरव्यवहितानन्तर्यं न स्यात्। इदं तु बोध्यं, यथा तत्तत्कार्यविच्छिन्नकालस्तत्तत्कार्यस्वरूपो नाना, देवदत्तकाले एव तदीयगवाश्वादेः क्वचिदन्तर्वर्ती कालः क्वचिदन्तर्बहिरुभयवर्ती कालः पृथक् पृथक्, तथा घटादिदेशस्तदन्तवर्त्यण्वादिदेशः पृथक्त्वेन गृह्यते, स च तत्तदुपाधिरूप एव। तेन सह तद्देशवर्त्तिपदार्थानां दैशिकविशेषणतासम्बन्धा नाना एव। तत्र परमाणुदेशो यदि नाभ्युपगम्यते तदा द्व्यणुकं त्र्यणुकं वाऽऽदाय दूरत्वादयो निर्वक्तव्याः। स्वनिरूपितप्रागादिदिग्गतं यावदणुव्यवधानं घटादेस्तद्दिशायामन्यदिशायां वा तन्न्यूनव्यवधाने समीपत्वं तदधिकव्यवधाने दूरत्वम्। चन्द्रान्मङ्गलो दूर इति भिन्नदिशायामपि दूरत्वादिव्यवहारात्। न च संयोगेनैवोपपत्तौ दैशिकविशेषणतावैयर्थ्यम्। विवक्षितयावद्देशे एकसंयोगाऽयोगस्योपदर्शितत्वाद् दूरत्वादिनिर्वचनानुपपत्तेः। पूर्वकपालैकदेशोत्तरकपालैकदेशैतदुभयमिलितद्रव्यान्तरविरहेऽपि तद्द्वयस्य मिलितस्य देशत्वानपायात्॥ १११॥

**इत्थं चाऽभावादेः पृथगेव भवेत् स्वरूपसम्बन्धः।**
**जगुरपरेऽनतिरिक्तौ दिक्कालावीश्वरात् खाद्वा॥ ११२॥**

इस प्रकार स्वरूपसम्बन्ध को इन दो से पृथक् रखना ही ठीक है। कुछ लोग (दीधितिकारादि) दिक् और काल को ईश्वर रूप ही मानते हैं। अन्य (दिनकारादि) आकाशरूप मानते हैं॥ ११२॥

इत्थं चेति। कालिकदैशिकपरत्वापरत्वादेर्विलक्षणविशेषणताविशेषसम्बन्धेनैव सिद्धेरभावीयविशेषणताविशेषस्ततः पृथगेव स्वरूपसम्बन्धः।

दीधितिकारादयस्तु दिक्कालावीश्वरान्नातिरिच्येते इति वदन्ति। अन्ये त्वाकाशात्। न च कालिकविशेषणतादिघटकतया तत्सिद्धिः। तादृशविशेषणतात्वादेरखण्डधर्मत्वेन कालाद्यघटितत्वात् ॥ ११२ ॥

**तादात्म्यं सम्बन्धो भेदप्रतियोगितामवच्छिन्द्यात् ।**
**न हि धीर्घटो घटो नेत्यथ च पटो नेति यद्भवति ॥११३॥**

भेद में प्रतियोगितावच्छेदक सम्बन्ध तादात्म्य होता है। घट तादात्म्येन घट में है अतः 'घटो घटो न' ऐसा नहीं होता। और वहाँ तादात्म्य से पट नहीं है अतः 'घटः पटो न' ऐसा होता है ॥ ११३ ॥

तादात्म्यं नाम कश्चन सम्बन्धः पृथक्। स भेदप्रतियोगितावच्छेदकः। स कुतोऽभ्युपगन्तव्यः ? यद् = यतः घटो घटो नेति धीर्न भवति। भवति च घटः पटो नेति। तत्र संयोगादेः सम्बन्धत्वे घटे घटसंयोगविरहाद् घटो घटो नेति स्यात्। पटवेष्टितघटे घटः पटो नेति न स्यात्। तस्मात्तादात्म्यमतिरिक्तम् ॥ ११३ ॥

**भेदाभावं केचित्तादात्म्यं नातिरिक्तमिच्छन्ति ।**
**मेये वाच्यं चेत्स्यात्तेन तदा स्यात्तदतिरिक्तम् ॥ ११४ ॥**

कुछ लोग भेदाभाव को ही तादात्म्य मानते हैं, अतिरिक्त नहीं। परन्तु 'मेयं वाच्यं यहां वाच्यतादात्म्य अप्रसिद्ध हो जाएगा। क्योंकि वाच्यभेद अप्रसिद्ध होने से वाच्यभेदाभाव भी अप्रसिद्ध होगा ॥ ११४ ॥

केचित्तु तादात्म्यमभेदो भेदाभावरूपो न त्वतिरिक्तमित्याहुः। परन्तु प्रमेयं वाच्यं भवतीत्यादौ वाच्यादिभेदाप्रसिद्धेरतिरिक्तमेव तत्। न हि यत्किंचिद्भेदाभावः सम्बन्धः। घटे घटान्तरभेदसत्त्वात्। घटत्वावच्छिन्नभेदनिवेशावश्यकत्वात्। प्रमेयत्वावच्छिन्नभेदाऽप्रसिद्धेः। सर्वं प्रमेयं वाच्यमिति भवति व्यवहारः। परन्तु भेदप्रतियोगितावच्छेदकसम्बन्धविधया तादात्म्यसिद्धिः। प्रमेयभेदविरहात्प्रमेयतादात्म्यमपि नाभ्युपगन्तव्यम्। वाच्यं प्रमेयं भवतीत्यादिकं वाच्ये प्रमेयत्वसंसर्गावगाह्यस्त्वितिमतसूचनाय चेदित्युक्तम् ॥ ११४ ॥

**तादात्म्येनाभावो भेदोऽभावश्च तस्य तादात्म्यम् ।**
**अन्योन्याश्रयताऽतो दुर्वारा तन्मते भवति ॥११५॥**

दूसरी बात, भेद कहते हैं तादात्म्येन अभाव को। और तादात्म्य कहते हैं भेद के अभाव को इस प्रकार अन्योन्याश्रय दोष होगा ।। ११५ ।।

किं च तादात्म्यावच्छिन्नप्रतियोगिताकाभावो भेदः। तस्य भेदस्याभावश्च तादात्म्यमित्यन्योन्याश्रयता। न च भेदत्वमखण्डोपाधिरिति नान्योन्याश्रयतेति वाच्यम्। यत्किचिद्भेदस्य सर्वत्र सत्त्वात्स्वविशिष्टभेद एव प्रवेश्यः। वैशिष्ट्यं तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनैव। अन्यथा घटभेदोपरि घटात्यन्ताभावसत्त्वात्तयोरैक्यात्तदभावस्य घटे विरहाद् घटतादात्म्यं न स्यात् ।। ११५ ।।

**तदसाधारणधर्मं तादात्म्यं केचिदूचिरे तच्च।**
**तद्व्यक्तौ दुर्वचमिति तादात्म्यत्वं विदुरखण्डम् ।।११६।।**

कुछ लोगों का कहना है कि तत्तद्वस्तुका असाधारण धर्म ही उसका तादात्म्य है। जैसे घटका घटत्व। परन्तु तद्व्यक्ति का तादात्म्य क्या होगा? तद्व्यक्तित्व कहें तो वह तद्व्यक्तित्व क्या है? न्यायाचार्य लोग तद्व्यक्तितादात्म्य को ही तद्व्यक्तित्व कहते हैं। वहाँ आत्माश्रय दोप होगा। अतः तादात्म्यत्व अखण्ड धर्म है। तद्विशिष्ट ही तादात्म्य है ।। ११६ ।।

केचित्तु घटाद्यसाधारणधर्मो घटत्वादिरेव संसर्गविधया भासमानं तादात्म्यं वदन्ति। तच्च तद्व्यक्तौ दुर्वचम्। तद्व्यक्तित्वस्य तद्व्यक्तितादात्म्यातिरिक्तस्य दुर्वचत्वात्। वह्नित्वाद्यननुसन्धानकालेऽपि तद्व्यक्तित्वेन वह्निव्यक्त्यवगमदर्शनात्। न हि तद्व्यक्तीतरनिखिलभेदोऽसर्वज्ञेन शक्यो ज्ञातुम्। येन तद्व्यक्तीतरभेदसमुदायस्तद्व्यक्तित्वं निर्वक्तु शक्यम्। तस्मात्तादात्म्यं वा तादात्म्यत्वं वाऽखण्डं पृथगेव ।। ११६ ।।

**स्वत्वस्वाम्यादिकमपि केचित्सम्बन्धमाहुरतिरिक्तम्।**
**मित्रं हरेः सुदामेत्यादिवदन्ये विषयतां तम् ।।११७।।**

स्वस्वामिभावादिको भी कुछ लोग अतिरिक्त सम्बन्ध मानते हैं। दूसरे उसे विषयता विशेष ही मानते हैं। जैसे सुदामा हरि के मित्र हैं इत्यादि में स्वस्वामिभाव नहीं है, मित्र भाव है ।। ११७ ।।

राज्ञः पुरुषः, देवदत्तस्य गृहमित्यादौ पुरुषगृहादेः स्वत्वम्। राजदेवदत्तादेः स्वाम्यम्। स्वस्वामिभावमिमं पृथक्केचिदाहुः। आदिपदेन यज्ञस्य पशुरित्यादावङ्गाङ्गिभावः। यज्ञस्य भस्मेत्यत्रावशेषावशेषिभावः।

वस्त्रस्य मूल्यमित्यादौ मूलसमभाव इत्यादिकं ग्राह्यम्। एतत्सर्वमतिरिक्तं सम्बन्धमाहुः। अन्ये त्वेष सर्वो विषयताविशेष एव। यथा मित्रं हरेः सुदामेति। न च तत्रापि मित्रभावादिः सम्बन्धान्तरमिति वाच्यम्। मित्रपदं विना हरेः सुदामेत्यादिप्रयोगादर्शनान्मित्रत्वबुद्धिविषयतायास्तत्त्वात्। एवं देवदत्तस्य भ्राता पिता श्यालक इत्यादौ। यज्ञस्य पशुरित्यादौ शास्त्रजनित-यज्ञसाधनताबुद्धिविषयत्वं शेषत्वमित्यादि बोध्यम्। अयं दक्षिणदेशस्य, अयमुत्तरदेशस्येत्यादौ तद्देशोत्पन्नत्वादिमात्रमर्थः॥ ११७॥

**स्वत्वं यत्त्वं तत्त्वं समनुगतं केचनेह वाञ्छन्ति।**
**अननुगतं तु तदपरे तत्तद्वस्तुस्वरूपमपि॥ ११८॥**

स्वत्व, यत्त्व, तत्त्व इत्यादि को कुछ लोग अनुगत धर्मविशेष मानते हैं। जैसे—यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववान् इत्यादि व्याप्ति-प्रदर्शन में सर्ववस्तु यत् आदि पद से ग्राह्य हैं। दूसरे विद्वानों का कहना है कि यत्त्वतत्त्वादि अननुगत ही है और तत्तद्वस्तुस्वरूप है। पूर्वोक्तसामान्यव्याप्ति असिद्ध है॥ ११८॥

स्वत्वादिकं बुद्धिविशेषविषयतावच्छेदकावच्छिन्नत्वादिना समनुगतं स्वत्वत्वेन वा। तत्र बुद्धिविशेषो नियामकः। अन्यथा व्याप्त्यादौ कुत्राप्यनु-गतप्रतीतिर्न स्यात्। एवं यत्त्वतत्त्वे। यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववानित्याद्यनुगतान्वयव्यतिरेकयोरन्यथानुपपत्तेरिति केचन वदन्ति। नास्त्येवानुगतव्याप्त्यादिकमिति नव्याः॥ ११८॥

**उक्तोऽखण्डोपाधिर्जातिसमानः स्वरूपसम्बन्धी।**
**भेदत्वादिः स पृथक् तद्वत्प्रतियोगितात्वादिः॥ ११९॥**

अखण्डोपाधि प्रतियोगितात्व अनुयोगितात्वादि पूर्वोक्त सभी हैं। वह जाति के समान स्वतोव्यावृत्त अनुगत है। विशेषता यही है कि जाति समवायसम्बन्ध से रहती है, अखण्डोपाधि स्वरूपसम्बन्ध से। भेदत्व, प्रतियोगितात्वादि सभी अखण्डोपाधि है॥ ११९॥

अखण्डोपाधिरनेकविधो दर्शितः। स जातिसमानः। समानता च नित्यत्वानेकानुगतत्वनिरवच्छिन्नप्रकारताश्रयत्वादिभिर्बोध्या। जात्यपेक्षया विशेषमाह—स्वरूपेति। जातिः समवायेन सम्बद्धा। अखण्डोपाधिः स्वरूपसम्बन्धेन सम्बद्धः। कोऽसौ? भेदत्वादिः। अभावत्वादिकमादिपदेन ग्राह्यम्। स चाखण्डोपाधिः सप्तपदार्थीतः पृथगेव। प्रतियोगितात्वादि-र्व्याख्यातोऽप्यखण्डोपाधिर्न विस्मर्तव्य इत्याह—तद्वदिति॥ ११९॥

**प्रामाण्यादिघटकता प्रतियोगित्वादिकस्य भवति ततः ।**
**अस्त्यन्यदपि द्रव्यादीत्युक्तं भाष्यकारेण ॥ १२० ॥**

न्यायशास्त्र में ये प्रतियोगित्वादि सभी स्वीकृत हैं। क्योंकि प्रमाण प्रमेय इत्यादि पदार्थ में प्रमाकारणत्वं प्रमाणत्वं इत्यादि व्याख्या जब करनी पड़ती है तब करणत्वादि में घटकरूप से प्रतियोगित्वादिका आना अनिवार्य है। अत एव भाष्यकार वात्स्यायन ऋषि ने षोडशपदार्थ कहकर ''अस्त्यन्यदपि प्रमेयं'' ऐसा कहा ॥ १२० ॥

एतावता संक्षेपेण वैशेषिका नव्यनैयायिकोदिताश्च पदार्थास्तत्त्वज्ञानोपयोगितया निरूपिताः। नन्वेषां सत्त्वमेव न न्यायसंमतमिति कुत एतन्निरूपणमित्यत आह—प्रामाण्यादीति। प्रमाणप्रमेयेत्यादिषोडशपदार्थे प्रमाकरणत्वं प्रमाणत्वं, तत्र कारणत्वं कीदृशमिति विचारणीयम्। पृथक् पदार्थो वा नियतपूर्ववृत्तित्वं वा। नियतत्वघटकतया प्रतियोगित्ववृत्तित्त्वादिकं कीदृशमिति। प्रमेयं प्रमाविषयताश्रयः। तत्र विषयत्वं किमिति विचार्यम्। तथा च प्रतियोगित्वादिविचारः कृतः। अत्र भाष्यकारेण प्रमेयोद्देशसूत्रे आत्मेन्द्रियादिकं प्रमेयमुद्दिष्टं व्याख्यायोक्तम्-अस्त्यन्यदपि द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयमिति। प्रमातुं योग्यं, षोडशपदार्थानामात्मेन्द्रियादीनां वा सम्यक्प्रमोत्पत्त्यर्थमिति तदर्थः। मुख्यं प्रमेयमात्माद्येव। तत्प्रमितेरपवर्गप्राप्तेः। तद्विपर्यासाद्बन्धनोत्पत्तेः। तदुक्तं भाष्यकृतैव—''अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात् संसार इतीति'' सूत्रकारेण प्रमाणादीनां सर्वेषां तत्त्वज्ञानादपवर्ग उक्तः प्रथमम्। तत आत्मादयः प्रमेयमित्युक्तम्। तद्विरुद्धमिवेति पश्यन् भाष्यकारः प्रमेयमात्रं व्याख्याय तदीयतत्त्वज्ञानादेवापवर्गमाह। प्रामाण्यादितत्त्वज्ञानप्रयुक्तात्मादितत्त्वज्ञानं साक्षादपवर्गसाधनम्। आत्मादिमिथ्याज्ञाने संसारावश्यंभावात्। क्वचित्प्रामाण्यादि सांशयिकादिज्ञाने न संसारप्रसक्तिरित्याशयः। इत्थं च प्रमाणादितत्त्वज्ञानमात्मादिप्रमित्युत्त्युपयोगि भवतीत्यन्तरङ्गतया प्रमाणादीनि निरूपणीयानि। तत्तत्वज्ञाने बहिरङ्गतया द्रव्यादितत्त्वज्ञानमप्युपयोगि कदाचिद्भवतीति प्रमेयं तदपीति भाष्याकाराभिप्रायः। तथा च तन्निरूपितमस्माभिः संक्षेपतः ॥ १२० ॥

**इति द्वितीयं नव्यन्यायपदार्थनिरूपणप्रकरणम् [२]**

**इति श्री जयमङ्गलाचार्य ( महामण्डलेश्वर काशिकानन्द गिरि )**
**विरचितायां न्यायसिद्धान्तरत्नमालायां पूर्वार्धम् ।**

ॐ

# न्यायसिद्धान्तरत्नमाला

## ( उत्तरार्धम् )

## अथ प्रमाणनिरूपणम्

**प्रत्यक्षानुमानपोमानशब्दाः प्रमाणानि ( न्या० १.१.३ )**

**तत्सम्बन्धिविशेष्यकतत्सम्बन्धित्वधीः प्रमा नाम ।**
**तत्करणं तच्चापि प्रमाणशब्दाभिधेयं स्यात् ।। १ ।।**

जो धर्म जिसमें है उसमें उस धर्म का भान प्रमा है। उसको और उसके करण को प्रमाण कहते हैं ।। १ ।।

तत्सम्बन्धिनिष्ठविशेष्यतानिरूपिततादृशसम्बन्धावच्छिन्नतन्निष्ठप्रकारताकज्ञानं प्रमा। रजतत्वसमावायिनि समवायेन रजतत्वज्ञानं तथा। भूतले घट इत्यत्र संयोगसम्बन्धावच्छिन्नाधेयतासम्बन्धेन भूतलसम्बन्धी घटस्तद्विशेष्यकस्य तादृशसम्बन्धावच्छिन्नभूतलप्रकारताकस्य प्रमात्वम्। तद्वति तत्प्रकारकं ज्ञानं प्रमेत्यादौ भूतलवत्त्वं न घटादेरिति लक्षणाव्याप्तिः स्यात्। न च तत्र सप्तम्यर्थाधेयत्वमेव घटे प्रकार इति घटस्य तद्वत्त्वाददोष इति वाच्यम्। आधेयत्वस्य संसर्गतया भानात्। आधेयत्वस्य प्रकारतया भाने तत्र प्रकारो भूतलम्। न ह्याधेयता भूतलवतीति तदंशे प्रमात्वं न स्यादेव ।। १ ।।

**तदसम्बन्धिविशेष्यकतत्सम्बन्धित्वधीर्भ्रमः प्रोक्तः ।**
**स ह्यप्रमापदार्थोऽप्रमाणशब्दाभिधेयोऽपि ।। २ ।।**

जो धर्म जिसमें नहीं है उसमें उस धर्म को देखना भ्रम कहलाता है। उसी को अप्रमा अप्रमाण आदि भी कहते हैं ।। २ ।।

तदसम्बन्धिनिष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानं भ्रमः। सैवाप्रमेति अप्रमाणमिति चोच्यते ।। २ ।।

**प्रामाण्यस्योत्पत्तिर्ज्ञप्तिश्चान्वीक्षिकीमते परतः ।**
**गुणतस्तूत्पत्तिः स्यादनुमानाज्ज्ञप्तिरेवापि ।। ३ ।।**

न्याय मत में प्रामाण्य की उत्पत्ति और ज्ञप्ति परतः होती है। इन्द्रिय संनिकर्षादिगुण से प्रामाण्य की उत्पत्ति होती है। अनुमान से ज्ञप्ति होती है ।। ३ ।।

प्रमाणानां प्रामाण्यं स्वत उत्पद्यते ज्ञायते च । स्वप्रकाशत्वाद् ज्ञानस्येति मीमांसकाः । तत्र प्रभाकरमते भ्रमज्ञानविरहादेव भ्रमे प्रमात्वोत्पत्त्यापत्तिपरिहारः । भाट्टादिमते भ्रमसामग्र्या प्रमात्वोत्पत्तिप्रतिबन्धकत्वान्न भ्रमे प्रमात्वोत्पत्तिः । स्वप्रकाशतया प्रमात्वं ज्ञायते । अतएव ज्ञानोत्तरमविलम्वं निष्कम्पप्रवृत्तिः । अन्यथा प्रमात्वावगमाय प्रतीक्षेत । नैयायिकानां मते प्रामाण्यस्योत्पत्तिर्ज्ञप्तिश्च परत एव । गुणतः इति । इन्द्रियसन्निकर्षादिगुणः । न च प्रत्यक्षं प्रत्येवेन्द्रियसंनिर्षः कारणमिति कथं तस्य गुणत्वं, मीमांसकैरपि तदभ्युपगमावश्यकत्वादिति वाच्यम् । यत इन्द्रियसंनिकर्षेण तेषां ज्ञानोत्पादेऽपि ज्ञानमेव प्रामात्वप्रयोजकम् । अन्वीक्षिकीमते इन्द्रियसंनिकर्षप्रयुक्ता तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारतेति विशेषः । ज्ञप्तिश्च सफलप्रवृत्तिजनकत्वादिलिङ्गकानुमानात् । न च ज्ञानसमनन्तरं विनैव प्रतीक्षां निष्कम्पप्रवृत्तिदर्शनान्नानुमानानन्तरज्ञेयत्वमिति वाच्यम् । प्रवृत्तिं प्रति प्रामाण्यज्ञानस्याहेतुत्वात् । क्वचित्प्रामाण्यज्ञानस्य प्रतिबन्धकीभूताप्रामाण्यज्ञानविघटकतयैवोपयोगात् ।। ३ ।।

**यदनभ्यासदशायां भवति प्रामाण्यसंशयो नृणाम् ।**
**न खलु स घटते तस्य प्रामाण्यस्य स्वतस्त्वमते ।। ४ ।।**

स्वतः प्रमाण वाद में प्रामाण्यविषयक संशय अनभ्यस्त दशा में नहीं होना चाहिये ।।

मरुकूपे जलं विलोकमानः शङ्कते इदं जलज्ञानं प्रमा न वेति । रज्जुबद्धपात्रेणोत्थाप्य पानेऽर्थक्रियाकारित्वेन प्रामाण्यमनुमीयते जलज्ञानं प्रमासीदर्थक्रियाकारित्वादिति । द्वितीयदिवसे तत्र झटिति प्रामाण्यस्यानुमानादुपनयाद्वा संशयो नोदेतीत्यनभ्यासदशायामित्युक्तम् । स्वतः प्रामाण्ये तेन बाधादप्रामाण्यसंशयो न घटते ।। ४ ।।

**स्मरणे प्रमात्वमेके तत्र न परतो जनिर्न वा ज्ञप्तिः ।**
**तस्याप्रमात्वमन्ये स्मृतिभिन्ना तन्मते प्रमितिः ।। ५ ।।**

स्मरण प्रमा है ऐसा एक मत है । उस मत में स्मरण में प्रामाण्य की उत्पत्ति या ज्ञप्ति दोनों परतः नहीं है । उसे जो अप्रमा मानते हैं उनके मत से स्मृति-भिन्नत्व प्रमा के लक्षण में जोड़ना चाहिये ।।

स्मरणं यथार्थमपि भवतीति तस्यापि प्रमात्वे तस्य गुणजन्यत्वा-भावादननुमेयत्वाच्च स्मृतिभिन्नज्ञानप्रमाण्ये स्वतस्त्वपरतस्त्वविप्रतिपत्ति-र्द्रष्टव्या । न च ह्यस्तनं ज्ञानं प्रमा न वेति संशयादधुना स्मरणं प्रमा न वेति संशयस्य ह्यस्तनस्थलं गत्वा सफलप्रवृत्तौ ह्यस्तनं ज्ञानमद्यतनं स्मरणं च प्रमैवेत्यनुमानस्य च दर्शनान्न स्मृतिभिन्नत्वविशेषणमावश्यकमिति वाच्यम् । क्वचित्तथा संभवेऽपि सर्वत्र तदभावात् । यत्र ह्य एव प्रामाण्यज्ञानं तत्राद्य स्मृतौ प्रमासहितस्यैव स्मरणस्योत्पत्तेः । न च तत्रापि जलांशे जलसंस्कारः कारणं प्रमात्वांशे प्रमात्वसंस्कारः कारणमिति यावज्ज्ञानग्राहकसामग्री-ग्राह्यत्वलक्षणस्वतस्त्वं नास्तीति वाच्यम् । स्वाश्रयेण गृह्यमाणत्वलक्षण-स्वतस्त्वसत्त्वात् । तस्य = स्मरणस्यऽन्येऽप्रमात्वमाहुः । तन्मते स्मृतिभिन्नत्वे सति तद्वति तत्प्रकारकं ज्ञानमिति लक्षणं वक्तव्यम् ।। ५ ।।

**प्रत्यक्षादनुमानादुपमानाच्छब्दतश्चतुर्भ्यो हि ।**
**[1]प्रमितिः स्यात्प्रत्यक्षानुमितिरुपमितिश्च शाब्दी च ।। ६ ।।**

प्रयक्ष, अनुमान, उपमान, और शब्द इन चार प्रमाणों से प्रत्यक्ष, अनुमिति, उपमिति और शाब्दी प्रमिति होती है ।

इन्द्रियार्थसंनिकर्षरूपात् प्रत्यक्षात्, लिङ्गज्ञानात्मकानुमानात्, सादृश्य-ज्ञानात्मकोपमानाद्, आप्तोपदेशात्मकशब्दादिति चतुर्भ्यः प्रमाणेभ्यः प्रत्यक्ष-प्रमाऽनुमितिप्रमा उपमितिप्रमा शब्दी प्रमेति चतस्रः प्रमाः फलभूता भवन्ति ।। ६ ।।

**इन्द्रियार्थसंनिकर्षजन्यं ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षम् ( न्या० १.१.४ )**

**प्रत्यक्षप्रमितिः स्यादर्थेन्द्रियसंनिकर्षजन्यमतिः ।**
**अव्यपदेश्यं चाव्यभिचारिव्यवसाय एवापि ।। ७ ।।**

---

१. पाठान्तर—प्रत्यक्षमनुमितिश्चाप्युपमितिरपि शाब्यपि प्रमितिः ।। ६ ।।

विषय और इन्द्रियों के संनिकर्ष से प्रत्यक्ष प्रमा होती है। प्रत्यक्ष प्रमा दो प्रकार की होती है—(१) अव्यपदेश्य अर्थात् निर्विकल्पक, और (२) अव्यभिचारी व्यवसाय अर्थात् सविकल्पक ॥

इन्द्रियार्थसंनिकर्षजन्यं ज्ञानं प्रत्यक्षम्। तद् द्विविधम्। अव्यपदेश्यं-निर्विकल्पकम्। अव्यभिचारिव्यवसायः=अर्थाव्यभिचारिरूपः सविकल्पकश्च। भ्रमवारणायार्थाऽव्यभिचारिति। जन्यप्रमाया एव लक्ष्यत्वात्। प्रमाणनिरूणे तस्यैव निरूपणीयत्वात्। ईश्वरप्रमा न जन्या। न भ्रमो न प्रमा। ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति सर्वसाधारणलक्षणमाहुः। ननु अलौकिकसंनिकर्षयोर्ज्ञानरूपत्वात्तत्करणकप्रत्यक्षे तदप्यव्याप्तम्। लौकिकप्रत्यक्षस्य लक्ष्यत्वे ईश्वरज्ञानव्यावृत्तिस्तत एव स्यादिति चेन्न। सन्निकर्षस्य व्यापारत्वेन करणत्वाभावात् ॥ ७ ॥

**अव्यभिचरितार्थत्वादव्यपदेश्यं प्रकारशून्यमपि।**
**प्रमितिं सूत्रकृदगदीद् भ्रमप्रमाभ्यां पृथक्त्वन्ये ॥ ८ ॥**

विषयों का व्यभिचार न होने के कारण अव्यपदेश्य निर्विकल्पक ज्ञान प्रमा है, ऐसा सूत्रकार मानते हैं। अन्य विचारक निर्विकल्प ज्ञान को भ्रम और प्रमा से पृथक् बताते हैं।

अव्यभिचरितार्थत्वादव्यपदेश्यं निर्विकल्पकं प्रमेति सूत्रकाराभिमतम्। अन्ये तु निर्विकल्पकं भ्रमप्रमाभ्यामन्यदाहुः। व्यभिचरितार्थनिर्विकल्पकानभ्युपगमाद् व्यवसायमात्रविशेषणमव्यभिचारितेति। व्यवसायः सविकल्पकः ॥ ८ ॥

**संयोगः संयुक्ते समवायस्तद्युते च समवायः।**
**समवायः समवेते समवायोऽर्थे विशेषणता ॥ ९ ॥**
**षोढैष संनिकर्षस्तेन स्यादिन्द्रियार्थसम्बन्धः।**
**आत्मा मनसा युञ्ज्याद्युञ्ज्यान्मनइन्द्रियैः प्रथमम् ॥ १० ॥**

संयोग, संयुक्तसमवाय, संयुक्तसमवेतसमवाय, समवाय, समवेतसमवाय और सम्बद्धविशेषणता—ये छह संनिकर्ष हैं जिनसे इन्द्रिय और विषय का सम्बन्ध होता है। पहले आत्मा मनसे संयुक्त होता है, तब मन इन्द्रियों से तथा फिर इन्द्रिय विषय से सम्बद्ध होती है।

संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, सम्बद्धार्थविशेषणता चेति षोढा संनिकर्षः। प्रथमं तु आत्मा मनसा संयुज्यते, मन इन्द्रियैः तत इन्द्रियार्थसंनिकर्षात् प्रत्यक्षम् ॥ ९–१० ॥

**कलशस्य तद्गुणस्य च तद्गतजातेश्च किं च शब्दस्य।**
**शब्दत्वस्य च किं चाभावस्य निदर्शनीयोऽयम् ॥ ११ ॥**

कलश का प्रत्यक्ष संयोगसंनिकर्ष से, कलश के गुणक्रिया और जाति का संयुक्तसमवाय से, गुण आदि की जाति का संयुक्तसमवेतसमवाय से, शब्द का समवाय से, शब्दत्व का समवेतसमवाय से और अभाव का संयुक्तविशेषणता से होता है।

उक्तानां संनिकर्षाणां फलं प्रत्यक्षबोधः कस्य कस्येत्याह-कलशस्येति। कलशस्य संयोगः सन्निकर्षः। तद्गुणक्रियाजातीनां संयुक्तसमवयः। गुणादिगतजातीयप्रत्यक्षं संयुक्तसमवेतसमवायेन। शब्दस्य श्रोत्रसमवायेन शब्दत्वादेः समवेतसमवायेन। भूतलादौ घटाभावादेः संयुक्तविशेशणतादिना च प्रत्यक्षम् ॥ ११ ॥

**समवायेन महत्त्वं द्रव्ये प्रत्यक्षकारणं भवति।**
**रूपादौ समवायिनि समवायाद्यैर्यथायोग्यम् ॥ १२ ॥**

द्रव्यप्रत्यक्षसामान्य के प्रति समवायसे महत्त्व कारण होता है, रूपादिप्रत्यक्षसामान्य के प्रति समवायिसमवाय से कारण होता है ॥

द्रव्यप्रत्यक्षसामान्यं प्रति महत्त्वं समवायेन कारणं भवति, रूपादिप्रत्यक्षसामान्ये समवायिसमवायादिना ॥ १२ ॥

**चाक्षुषरूपेऽध्यक्षे कारणमालोकविषयसंयोगः।**
**समवायादिभिरुक्तं तत्रैवोद्भूतरूपं च ॥ १३ ॥**

चाक्षुप पत्यक्ष के प्रति प्रकाश और विषय का संयोग समवायादि सम्बन्ध से कारण है और वैसे ही उद्भूत रूप भी कारण है ॥ १३ ॥

प्रत्यक्षसामान्ये महत्त्वं कारणमुक्तम्। चाक्षुषरूपे प्रत्यक्षे तु विशेषो हेतुः। कः? अलोकविषयसंयोगः समवायाद्यैः। विषयतासम्बन्धेन द्रव्यप्रत्यक्षे समवायेनालोकसंयोगः कारणम्। तदीयरूपादिप्रत्यक्षे समवायिसमवायादिना स तथा। एवमुद्भूतरूपमपि। विषयनिष्ठप्रत्यासत्तिलाभाय विषयपदम् ॥ १३ ॥

**द्रव्यप्रत्यक्षे पुनरुद्भूतस्पर्श एव हि त्वाचे ।**
**घ्राणादिभिस्तु नैव द्रव्यप्रत्यक्षमिष्टमिह ।। १४ ।।**

द्रव्य के त्वाचप्रत्यक्ष में उद्भूत स्पर्श कारण है। न्यायमत में और वैशेषिक मत में घ्राणादि इन्द्रियों से द्रव्य का प्रत्यक्ष नहीं माना गया है ॥ १४ ॥

द्रव्यत्वाचप्रत्यक्षे तूद्भूतस्पर्शः कारणम्। घ्राणादीन्द्रियद्रव्यप्रत्यक्षं न भवति न्यायवैशेषिकनये ॥ १४ ॥

**गन्धादेः प्रत्यक्षं घ्राणादिभिरात्मनस्तु मनसा स्यात् ।**
**येनेन्द्रियेण यस्य तु तद्गतजातिक्रियादेश्च ।। १५ ।।**

गन्धादि का प्रत्यक्ष घ्राणादि इन्द्रियों से होता है। आत्मा का प्रत्यक्ष मन से होता है। जिस इन्द्रिय से जिसका प्रत्यक्ष होता है उसकी जाति का और उसमें होनेवालीं क्रिया का प्रत्यक्ष भी उसी इन्द्रिय से होता है ॥ १५ ॥

घ्राणादिभिर्द्रव्यग्रहणे कस्तेषां विषयस्तत्राह—गन्धादेरिति। आत्मनः प्रत्यक्षं मनसा। ज्ञानेच्छादीनां च। येनेन्द्रियेण यद्गृह्यते तद्गता जातिः क्रियादिश्च तेनैवेन्द्रियेण गृह्यते ॥ १५ ॥

**उपलभ्येत यदि स्यादिति यस्मिन्यत्प्रसज्यते येन ।**
**तदभावप्रत्यक्षं तस्मिंस्तेनेन्द्रियेण स्यात् ।। १६ ।।**

यदि होता तो उपलब्ध होता'—इस प्रकार की जिसकी जिसमें जिस इन्द्रिय से प्रसक्ति होती है, उसमें उसके अभाव का प्रत्यक्ष उसी इन्द्रिय से होता है।

इह यदि घटः स्याच्चक्षुषोपलभ्येतेति प्रसक्तिर्यत्र तत्र तस्य घटस्य योऽभावस्तत्प्रत्यक्षं तेन चक्षुषा तस्मिन्भूतलादौ स्यात्। वायौ रूपं स्याच्चक्षुषोपलभ्येतेति प्रसक्तिसत्त्वाद्वायौ रूपाभावस्य प्रत्यक्षं चक्षुषा भवति। अभावस्याधिकरणरूपत्वनये वायोरप्रत्यक्षत्वात्तत्र रूपाद्यभावप्रत्यक्षता न स्यात्। अत्यन्ताभावप्रत्यक्षे प्रतियोगिनो योग्यत्वमन्योन्याभावप्रत्यक्षेऽधिकरणस्य योग्यत्वमपेक्षितम् ॥ १६ ॥

**सामान्यलक्षणाख्योऽलौकिक उदघोषि संनिकर्षस्तु ।**
**इन्द्रियसम्बद्धाश्रितधर्मज्ञानं स्वविषयवतः ।। १७ ।।**

नैयायिक सामान्यलक्षणा नामका एक अलौकिक संनिकर्ष बताते हैं। इन्द्रिय जिसमें संबद्ध होती है, उसमें रहने वाले धर्म का ज्ञान ही उक्त संनिकर्ष है। वह उस धर्म के समस्त आश्रयों का ज्ञान कराता है ॥ १७ ॥

सामान्यलक्षणाख्योऽलौकिकसंनिकर्षो नैयायिकैरुदघोषि। स चेन्द्रियसम्बद्धविशेष्यकसामान्यज्ञानमेव। तच्च स्वविषयधर्मवत्त्वसम्बन्धेन बोद्धव्यम्। तेनैकस्मिन् वह्नौ दृष्टे तदीयज्ञानविषयवह्नित्वेन सर्ववह्निज्ञानं धूमत्वेन सकलधूमज्ञानं च सामान्यतो भवति ॥ १७ ॥

**दृष्टे वह्निव्याप्तिरदृष्टेऽदृष्टत्वतो न सन्देहः।**
**धूमो वह्निव्याप्यो न वेति सामान्यबोधात् स्यात् ॥ १८ ॥**

धूम और वह्नि, दोनों के प्रत्यक्ष होने पर इनकी व्याप्ति निश्चित ही ज्ञान है। धूम और वह्नि दोनों प्रत्यक्ष न हों, तो अज्ञात होने से व्याप्तिसंशय नहीं होगा। अत व्याप्तिसन्देह के कारणरूप से सामान्यलक्षणा स्वीकार्य है।

किमर्थमन्यैरस्वीकृत उदघोषीत्यत आह—दृष्ट इति। प्रत्यक्षधूमे प्रत्यक्षवह्निव्याप्तिरपि प्रत्यक्षैव। अदृष्टवह्निधूमयोरज्ञातत्वादेव न सन्देहः। तदा धूमो वह्निव्याप्यो न वेति सन्देहः कथं स्यात्। उच्यते। सामान्यबोधात् = सामान्यलक्षणाजन्यापूर्ववह्निधूमज्ञानात् स्यात् ॥ १८ ॥

**अपरमलौकिकमाहुः स्वसंनिकर्षं स्वगोचरज्ञानम्।**
**सा ज्ञानलक्षणा स्यात्तद्भवमुपनीतभानं स्यात् ॥ १९ ॥**

दूसरे अलौकिक संनिकर्ष का नाम ज्ञानलक्षणा है। उसके विषय का पूर्वोत्पन्न ज्ञान ही संनिकर्ष है। उक्त संनिकर्ष से उत्पन्न ज्ञान को उपनीतभान कहते हैं।

द्वितीयोऽलौकिकसंनिकर्षो ज्ञानलक्षणाख्यः स्वस्यैव स्वविषयज्ञानरूपः। तज्जन्यं ज्ञानमेवोपनीतभानमित्याहुः ॥ १९ ॥

**सुरभीदं चन्दनमिति सौरभभानं हि चाक्षुषे ज्ञाने।**
**प्रागनुभूतसुगन्धेरुपनयनादेव संभवति ॥ २० ॥**

'यह सुगन्धवाला चन्दन है' इस चाक्षुष ज्ञान में जो सुगन्ध का भान होता है वह पूर्वानुभूत सुगन्ध के उपनयन से ही होता है ॥ २० ॥

इदं सुरभिचन्दनमित्यादिपुरतःस्थितवस्तुविषयकचाक्षुषज्ञाने सौरभभानं घ्राणेन प्रागनुभूतसुगन्ध्युपनयनादेव संभवतीति ज्ञानलक्षणासिद्धिः।

शुक्ताविदं रजतमित्यादिबुद्धावपि रजतत्वादेः प्रागनुभूतस्य स्मरणेनोपनीतत्वाद् भ्रमोत्पत्तिः ॥ २० ॥

**केचन जगदुः कवयो भात्युपनीतं विशेषणतयैव ।**
**प्रायिकमेतन्मन्ये विशेष्यविधया भ्रमे भानात् ॥ २१ ॥**

कुछ विचारक ऐसा मानते हैं कि उपनींतज्ञान विशेषणरूप से ही होता है, किन्तु भ्रम स्थल में विशेष्यरूप मे भी उपनीतभान उपलब्ध होता है जिससे उक्त मत को प्रायोवाद ही मानना चाहिये ॥ २१ ॥

उपनीतं विशेषणतयैव भासत इति सिद्धान्तस्तु प्रायिको भवितुमर्हति। भ्रमे रजतत्वमत्रास्तीत्यादौ स्वप्ने अयं हस्तीत्यादौ च विशेष्यतयापि उपनीतभानदर्शनात् ॥ २१ ॥

**योगजमपि च तृतीयं द्विविधं युञ्जानयुक्तयोगिवशात् ।**
**ध्याने युञ्जानस्याखिलमपरस्यानिशं भाति ॥ २२ ॥**

तीसरे अलौकिक संनिकर्ष का नाम है योगज। वह दो प्रकार का है—१. युंजानयोगी को होनेवाला तथा २. युक्त योगी को होने वाला। समाधि लगाने पर युंजान योगी को सभी वस्तुओं का ज्ञान योगज संनिकर्ष से होता है। युक्त योगी को हमेशा ही इस संनिकर्ष से ज्ञान होता है ॥ २२ ॥

योगजसंनिकर्षस्तृतीयोऽलौकिकः। युञ्जाना युक्ताश्चेति योगिद्वैविध्यात्संनिकर्षद्वैविध्यमाहुः। ध्याने सति अपेक्षितस्याखिलस्य भानं युञ्जानस्य भवति। ध्यानमिह समाधिः। अपरस्य युक्तस्य सयाधि विनाप्यावश्यकस्याखिलस्य भानं स्यात् ॥ २२ ॥

**अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतोदृष्टं च (न्या० १.१.५)**

**अनुमितिकरणं [१]व्याप्तिज्ञानं द्वारं पुनः परामर्शः ।**
**पक्षे साध्यव्याप्तेर्विशिष्टवैशिष्टचबुद्धिः सः ॥ २३ ॥**

अनुमिति का करण व्याप्तिज्ञान (लिंग ज्ञान) है व परामर्श द्वार है। साध्य से विशिष्ट का पक्ष में वैशिष्टयावगाही ज्ञान परामर्श कहलाता है ॥ २३ ॥

---

१. लिङ्गज्ञानमित्यपि पाठः।

अनुमानं निरूपयति—अनुमितीति। अनुमितिकरणमनुमानम्। तच्च व्याप्तिज्ञानम्। द्वारं-व्यापारः परामर्शः। स परामर्शः पक्षे साध्यव्याप्ति-विशिष्टवैशिष्ट्यावगाहि ज्ञानम् ॥ २३ ॥

**अनुमित्युद्देश्यत्वं पक्षत्वं तद्विधेयता तु पुनः।**
**साध्यत्वं हेतुत्वं तत्साधनताभिमतमुक्तम् ॥ २४ ॥**

अनुमिति में उद्देश्यता को पक्षता, विधेयता को साध्यता और साधनता को हेतुता कहते हैं। साधनरूप से जो मान लिया जाये, वही हेतु समझना चाहिये।

पक्षसाध्यहेतून् निर्वक्ति—अनुमितौ यदुद्देश्यं स पक्षः। उद्देश्यत्वं पक्षत्वम्। ननु सन्दिग्धसाध्यकत्वं पक्षत्वमित्यादि वक्ष्यति। सत्यम्। एतत्पक्षताप्रयोजकत्वात्तत्र पक्षत्वव्यवहारः। यादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकयत्पक्षकयत्साध्यकानुमितिः प्रमाणिकीत्यादि पक्षता-लक्षणघटकतया प्रविष्टपक्षताया अपि तथाविधपक्षतार्थत्वे आत्माश्रया-द्यापत्तेः। तद्विधेयता-अनुमितौ विधेयं साध्यम्। तत्त्वं विधेयत्वम्। एतदुभयं विषयताविशेषरूपतया प्राग् व्याख्यातम्। अनुमितिसाधनत्वेनाभिमतो हेतुस्तत्त्वं हेतुत्वम्। क्वचिदसिद्ध्यादिना साधनत्वविरहसंभवात्साधनत्वा-भिमतमित्युक्तम् ॥ २४ ॥

**साध्याऽभिचरितत्वं व्याप्तिः स्वव्यापिसाध्यकत्वं वा।**
**साध्याभावव्यापकविरहप्रतियोगिता वा सा ॥ २५ ॥**

हेतु के साध्य से व्यभिचरित न होने का नाम व्याप्ति है। या हेतुव्यापि-साध्यसामानाधिकरण्य व्याप्ति है। अथवा साध्याभावव्यापकीभूत अभावप्रतियोगिता को व्याप्ति कहते हैं। प्रथम लक्षण केवलान्वयिस्थल में अव्याप्त है व तृतीय लक्षण व्यतिरेक व्याप्ति का है ॥ २५ ॥

साध्याभाववदवृत्तित्वं साध्यवदन्यवृत्तित्वं वा व्यभिचारस्तदभाव-वत्त्वमव्यभिचरितत्वम्। वह्निमान् धूमादित्यत्र साध्यो वह्निस्तदभाववान् ह्रदादिस्तत्र वृत्तित्वं मीनादेस्तदभावो धूमे इति सा व्याप्तिः। धूमाभावाऽधिकरणे तप्तायःपिण्डे वह्नेर्वृत्तित्वाद् धूमवान् वह्नेरित्यत्र नातिव्याप्तिः। साध्याभावश्च साध्यतावच्छेदकधर्मावच्छिन्नसाध्यता-वच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः। तेन तद्व्यक्तित्वेन

समवायेन वा वह्न्यभाववति महानसादौ धूमस्य वृत्तावपि न क्षतिः। न च पर्वतीयवह्नित्वेन पर्वतीयसंयोगेन च वह्न्यभावमादाय दोषतादवस्थ्यम्। साध्यतावच्छेदकेतरधर्मानवच्छिन्नत्वस्य साध्यतावच्छेदकसंसर्गतानवच्छेदकानवच्छिन्नसंसर्गताकत्वस्य च प्रतियोगितायां प्रवेशनीयत्वात्। एकत्वपर्याप्त्यभ्युपगमे तु साध्यतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं यत्प्रतियोगितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं तथा साध्यतावच्छेदकसंसर्गतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं यत्प्रतियोगितावच्छेदकसंसर्गतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं च तादृशप्रतियोगिताकाभावो वक्तव्यः। तेन वह्नित्वस्य वह्नित्वघटोभयं नेति भेदवत्त्वेन साध्यतावच्छेदकेतरत्वेऽपि नासंभवः। एवं सर्वत्र। न्यूनाधिकपर्याप्तिस्वरूपं प्राग् दर्शितम्। साध्यभावाधिकरणत्वं भावसाध्यकस्थले विशेषणताविशेषसम्बन्धावच्छिन्नतादृशाभावत्वावच्छिन्नाधिकरणत्वमेव। तेन वह्न्यभावस्य कालिकसम्बन्धेय प्रमेयत्वादिना वाधिकरणे पर्वतादौ धूमस्य वृत्तावपि न क्षतिः। अभावसाध्यकस्थले तदीयप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वं निवेश्यम्। अथवा साध्याभावत्वावच्छिन्ना या साध्यसामान्यीयप्रतियोगिता तदवच्छेदकसम्बन्धावच्छिन्नाधेयताकाधिकरणत्वं निर्वचनीयम्। साध्याभावः साध्याभावाभावस्य प्रतियोगी। साध्याभावाभावश्च साध्यरूप एवेति तदीयप्रतियोगित्वमेव साध्यसामान्यीयप्रतियोगित्वं तदवच्छेदकसम्बन्धश्च प्रागुक्तरूपे पर्यवस्यति। साध्याभावाधिकरणवृत्तित्वं हेतुतावच्छेदकसम्बन्धेन बोध्यम्। तेन वह्न्यभावाधिकरणे ह्रदादौ कालिकेन धूमस्य वृत्तावपि नाव्याप्तिः। वृत्तित्वाभावस्तादृशवृत्तित्वत्वावच्छिन्नप्रतियोगिताको ग्राह्यः। तेन धूमाधिकरणह्रदवृत्तित्वाभावस्य वह्नौ सत्त्वेऽपि नातिव्याप्तिः। अस्य परिष्कारः प्रागेव लेशेन कृत इति। एवमेव साध्यवदन्यावृत्तित्वमपि परिष्कार्यम्।

एतल्लक्षणं केवलान्वयिन्यव्याप्तम्। साध्याभावस्य साध्यवदन्यत्वस्य वा तत्राऽप्रसिद्धेः। सत्तावान् जातेरित्यादौ साध्याभावाधिकरणे सामान्यादौ हेतुतावच्छेदकसमवायसम्बन्धेन वृत्तेरप्रसिद्धेश्चात आह—स्वव्यापीति। व्यापित्वं व्यापकत्वं स्वसमानाधिकरणात्यन्ताभावाऽप्रतियोगित्वम्। तथा च हेतुसमानाधिकरणात्यन्ताभावाऽप्रतियोगिसाध्यसामानाधिकरण्यं हेतोर्व्याप्तिः। सामानाधिकरण्यं स्वाधिकरणवृत्तित्वम्। वह्निमान् धूमादित्यत्र धूमाधिकरणे पर्वतादौ वह्न्यभावविरहादभावान्तरस्य घटाद्यभा-

वस्य प्रतियोगितो भिन्नो वह्निरिति स व्यापकस्तत्सामानाधिकरण्यं धूमस्येति लक्षणसमन्वयः। धूमवान् वह्नेरित्यत्र वह्न्यधिकरणे तप्तायःपिण्डे धूमाभावसत्त्वात्तस्य प्रतियोग्येव धूमो नाऽप्रतियोगीति न व्यापकः। ततो नातिव्याप्तिः। हेतुतावच्छेदकावच्छिन्नहेतुतावच्छेदकसम्बन्धावच्छिन्नहेत्वधिकरणवृत्त्यभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसमानाधिकरण्यं निष्कर्षणीयम्। तेन महानसीयवह्न्यधिकरणवृत्त्यभावाऽप्रतियोगित्वेऽपि वह्नेर्न धूमो व्यापकः। समवायेन धूमाधिकरणे धूमावयवे वह्न्यभावसत्त्वेऽपि नाव्याप्तिः। धूमाधिकरणे पर्वते समवायेन तद्व्यक्तित्वेन च वह्न्यभावसत्त्वेऽपि नाऽव्याप्तिः। निरवच्छिन्नविशेषणताविशेषसम्बन्धाववच्छिन्नं हेत्वधिकरणवृत्तित्वं प्रवेश्यम्। तेन कपिसंयोगी एतद्वृक्षत्वादित्यत्र हेत्वधिकरणे एतद्वृक्षे मूलावच्छेदेन कपिसंयोगाभावसत्त्वेऽपि नाव्याप्तिः। यथोक्तहेत्वधिकरणवृत्त्यभावप्रतियोगितायां यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति निष्कर्ष। तेन कालो घटवान् महाकालत्वादित्यत्र साध्यतावच्छेदककालिकसम्बन्धेन हेत्वधिकरणे काले कस्याप्यभावस्य दुर्लभत्वेऽपि नाव्याप्तिः।

व्यतिरेकव्याप्तिलक्षणमाह—साध्याभावेति। साध्याभावव्यापकीभूताभावप्रतियोगित्वं व्याप्तिः। वह्न्यभावव्यापकीभूताभावप्रतियोगी धूमः। न तु धूमाभावव्यापकीभूताभावप्रतियोगी वह्निरिति वह्निमान् धूमादित्यत्रनाव्याप्तिर्नापि धूमवान् वह्नेरित्यत्रातिव्याप्तिः॥ २५॥

**सन्दिग्धसाध्यकत्वं पक्षत्वं केचिदूचिरे सुधियः।**
**उपनीतभानमेते संशयविरहे प्रकथयन्ति॥ २६॥**

कुछ विद्वान् जहाँ साध्य सन्देह हो उसे पक्ष कहते हैं व संशय न होने पर अनुमिति के स्थान पर उपनीतभान मानते हैं॥ २६॥

पर्वतादौ वह्निसंशये धूमं पश्यतस्तदनुमितिर्भवतीति सन्दिग्धसाध्यकत्वं पक्षत्वमनुमितिहेतुः। न च रात्रौ मेघगर्जने सति विनापि सन्देहं मेघानुमितिर्दृश्यत इति वाच्यम्। गर्जनजनकत्वेन मेघस्यातिप्रसिद्धत्वादेकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति तत् स्मरणोपनयेनैवाकाशस्य मेघवत्त्वबोधोपपत्तेः। न हि गर्जनत्वेन रूपेण ज्ञानाद् मेघानुमानं कस्यापि संमतं, किन्तु मेघगर्जनत्वेनेति मेघोपस्थितिः सर्वसंमता। तत्र यदि व्याप्तिज्ञानविलम्बं

सोढुं क्षमसे तर्हि साध्यसन्देहोऽपि कल्प्यतां तद्विलम्बस्यापि सोढुं शक्यत्वात् । न च मेघमनुमिनोमीत्यनुभवबलादनुमितिसिद्धिः, अन्यथानुमानमात्रोच्छेदापत्तेरिति वाच्यम् । सर्वत्र तथानुभवविरहात् । यत्रानुमिनोमीति तत्र सन्देहोऽप्यस्त्येव ॥ २६ ॥

**श्रवणोत्तरमपि युक्तं पुनरनुमानं प्रमेयसंशयतः ।**
**मननविधेरौचित्यं तेनैव समर्थयन्त्येते ॥ २७ ॥**

श्रवण के बाद भी प्रमेय-विषयक संशय रह जाने से अनुमान करना संगत है। अत एव श्रवणोत्तर मनन का विधान ( मन्तव्यः ) उचित है, ऐसा वे प्रतिपादित करते हैं ॥ २७ ॥

श्रोतव्यो मन्तव्य इति श्रवणोत्तरमननविधिः प्रमेयसंशयनिवृत्त्यर्थत्वेनैव वृद्धैः स्वीकृत इति तत्राप्यस्ति संशयः ॥ २७ ॥

**अपरे तु नैव मननमनुमानं किन्तु तर्करूपमतः ।**
**उपपत्तिभिरित्युक्तं स्मृत्या ज्ञानस्य दार्ढ्यार्थम् ॥ २८ ॥**

अन्य विचारक मनन को अनुमानरूप न मान तर्करूप मानते हैं। इस पक्ष के लिए 'उपपत्तियों द्वारा मनन करना चाहिये' यह स्मृति प्रमाण है। अतः वे कहते हैं कि मनन ज्ञान की दृढ़ता के लिये है ॥२८॥

अपरे तु मननं नाम नैवानुमानम् । किन्तु मन्तव्यश्चोपपत्तिभिरिति स्मृतेर्युक्तिसंधानेन ज्ञानदार्ढ्यजननमेव, न ह्युपपत्तिशब्दो हेतुवचन इत्याहुः ।

**न सिषाधयिषाभावविशिष्टायां जायतेऽनुमा सिद्धौ ।**
**तदभावो हेतुरतस्तामाहुः पक्षतामपरे ॥ २९ ॥**

साध्य को सिद्ध करने की इच्छा न हो और साध्य सिद्ध भी हो तो अनुमिति नहीं होती। अतः उक्त इच्छा हो व साध्यसिद्धि न हो, तब पक्षता होती है, ऐसा कुछ लोग स्वीकारते हैं ॥ २९ ॥

साध्यसिद्धौ सत्यां नानुमितिरिति सा प्रतिबन्धिका। सिषाधयिषासत्त्वे तु सिद्धिरकिंचित्करोति सोत्तेजिका, सिषाधयिषाविरहविशिष्टसिद्धिः प्रतिबन्धिकेति यावत् । तदभावः पक्षता। यादृशयादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकयत्पक्षकयत्साध्यकानुमितिः प्रमाणिकी तादृशता-

दृशसिषाधयिषाविरहविशिष्टसिद्धेरभावस्तल्लिङ्गकतत्पक्षकतत्साध्यकानुमितौ पक्षतेति विशिष्यैव कार्यकारणभावो वक्तव्यः। तेन प्रत्यक्षं जायतामितीच्छा-सत्त्वेऽपि नानुमितिः। प्रत्यक्षभिन्नं ज्ञानं जायतामिति सिषाधयिषासत्त्वे भवत्यनुमितिः। ननु द्विक्षणवर्तिन आत्मविशेषगुणाः। तथा च सिद्धिसिषाध-यिषापरामर्शानां क्रमे परामर्शकाले सिद्धिर्नास्तीति स्वतोऽनुमितिः स्यात्। सिषाधयिषासिद्धिपरामर्शानां परामर्शसिद्धिसिषाधयिषाणां वा क्रमे सिषाध-यिषाविरहात् परामर्शविरहाच्च नैवानुमितिरिति चेन्न। सिद्ध्याद्युत्तरं पुनः सिद्ध्याद्युत्पत्तिदर्शनात् सिद्ध्यादिः सिद्ध्यादिसामग्रीरूपेति सामग्र्या अपि प्रतिबन्धकत्वात्। सिद्धिपरामर्शसमूहालम्बने तु नितराम्॥ २९॥

**तत्त्रिविधमन्वयोत्थं व्यतिरेकोत्थं तथोभयोत्थं च।**
**वाच्यं मेयाद् गन्धात्क्ष्मेतरभिन्नाऽग्निमान् धूमात्॥ ३०॥**

अनुमान तीन प्रकार का होता है—(१) केवलान्वयि, (२) केवलव्यतिरेकि व (३) अन्वयव्यतिरेकि। मेय होने से वाच्य है, गन्धवती होने से पृथ्वी इतरभिन्न है तथा धूमवान् होने से अग्निमान् है—ये क्रमशः उक्त अनुमानों के उदाहरण हैं॥

तदनुमानं त्रिविधं केवलान्वयि, केवलव्यतिरेकि, अन्वयव्यतिरेकि च। इदं वाच्यं प्रमेयत्वादित्यत्र केवलान्वयि। ब्रह्म वाच्यं मेयत्वाद् यथा घट इत्यन्वयदृष्टान्तोऽस्ति। अन्यथा तु सर्वं वाच्यं मेयत्वादित्यनुपसंहार्येव हेत्वाभास इति द्रष्टव्यम्। क्ष्मा पृथिवी इतरभिन्ना गन्धवत्त्वादित्यत्र सर्वस्याः पृथिव्याः पक्षत्वादन्यस्य दृष्टान्तस्य विरहाद् या नेतरभिन्ना सा न गन्धवती यथा जलादीति केवलव्यतिरेकि। अग्निमान् धूमादित्यत्रान्वय-व्यतिरेकि। यो धूमवान् स वह्निमान् यथा महानसो, यो वह्निमान्न भवति स न धूमवानपि, यथा ह्रद इत्युभयसत्त्वात्॥ ३०॥

**व्यापकतावच्छेदकरूपेण स्यात् सदानुमा लिङ्गात्।**
**लाघवबोधे चेतरबाधे चाप्यन्यधर्मयुजा॥ ३१॥**

अनुमिति सदा व्यापकतावच्छेदकरूप से होती है, किन्तु यदि लाघवज्ञान या इतरबाध हो तो इतरधर्मसहितव्यापकतावच्छेदकरूप से अनुमिति होती है॥ ३१॥

धूमादिलिङ्गेन धूमव्यापकतावच्छेदकवह्नित्वादिधर्मेणानुमितिः सदा-भवति। किन्तु वह्नेर्महानसीयत्वे लाघवम्, कर्त्तुरेकत्वे लाघवदित्यादि

लाघवज्ञानसहकारे धूमलिङ्गेनापि महानसीयवह्नित्वेन, कार्यत्वलिङ्गेनाप्येककर्त्तृत्वेनानुमितिर्भवत्येव । एवमितरबाधेऽपि । यथा पर्वतीयेतरवह्निबाधकाले पर्वतीयवह्नित्वेनानुमितिः । यथा वा विद्या राजसु पूजितेतिवित् अयं विद्यावान् राजपूजितत्वादित्यत्र शास्त्रेतरज्ञानशून्य इति इतरबाधे शास्त्रीयज्ञानवानयमित्यनुमितिः ॥ ३१ ॥

**प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम् । ( न्या. १.१.६ )**

**गोसदृशो गवय इति श्रुत्वा वनमेत्य पश्यतो गवयम् ।**
**गवयपदवाच्यताधीरुदयति सोक्ता प्रमोपमितिः ॥ ३२ ॥**

'गवय गाय के जैसा होता है' ऐसा सुनकर वन में जा गवय को देखने पर 'गवय गवयपद का वाच्य है' ऐसा जो ज्ञान है उसे उपमिति कहते हैं ॥ ३२ ॥

उपमानं निरूपयति-गोसदृश इति । गोसदृशो गवय इति आरण्यकवचनं श्रुत्वा वनं गत्वा गवयं गोसदृशं पश्यतो गवये यद् गोसादृश्यज्ञानं तत्करणभूतमुपमानम् । वाक्यार्थस्मरणं व्यापारः । गवये गवयपदवाच्यताधीरुपमितिः प्रमा फलम् ॥ ३२ ॥

**इतरगवादिविधर्मा लम्बग्रीवः क्रमेलको भवति ।**
**वैधर्म्यज्ञानादिह करभपदार्थावगतिरुदिता ॥ ३३ ॥**

गाय आदि से विलक्षण धर्म वाला, लम्बे कण्ठ वाला ऊँट होता है—ऐसा सुनने के बाद ऊँट को देखकर 'ऊँट ऊँट शब्द का वाच्य है', यह ज्ञान भी उपमिति ही है ॥ ३३ ॥

गवादिविधर्मा लम्बग्रीवः क्रमेलक इति दाक्षिणात्यः श्रुत्वोत्तरापथमागतः क्रमेलकं तथाविधं पश्यन् क्रमेलकपदवाच्यतां यत्तस्यावगच्छति साप्युपमा ॥ ३३ ॥

**विनिहन्ति मुद्गपर्णीसदृशी विषमौषधीति निशमयतः ।**
**विषहारितामतिर्या साप्युपमा तत्समौषध्याम् ॥ ३४ ॥**

मुगौनी के सदृश एक औषधि है जो विष का निवारण करती है—यह सुनकर और फिर तादृश औषधि को देखकर 'यह विष का निवारण करने वाली है' ऐसी बुद्धि भी उपमा ( उपमिति ) है ॥ ३४ ॥

मुद्गपर्णीदृशी औषधी विषहारिणीति श्रुत्वा वने मुद्गपर्णीसदृशीमौषधिं पश्यत इयं विषहारिणीति या मतिः साप्युपमा। मुद्गपर्ण्योपमिनोमि विषहारित्वमित्यनुभवात् ॥ ३४ ॥

**ननु चोपनीतभानं सर्वत्र स्यादिहेति किमुपमया।**
**सत्यं तह्युपनयनादुपपत्तेर्ब्रूहि किमनुमया ॥ ३५ ॥**

पूर्वोक्त सभी स्थलों में पूर्वश्रुत का उपतीत भान ही मानना चाहिये, पृथक् उपमान प्रमाण क्यों मानना ? यदि ऐसा कहो, तब तो अनुमिति स्थल में भी उपनीत भान से ही काम चल जाने के कारण अनुमान को भी पृथक् प्रमाण मानना व्यर्थ हो जायेगा ॥ ३५ ॥

ननु मुद्गपर्णीसादृश्यज्ञाने सति पूर्वश्रुतविषहारित्वस्योपनीततया भानं भविष्यतीति किमुपमानप्रमाणेन। सत्यम्। धूमोपस्थितवह्निसामान्यस्य पर्वते उपनीतभानं भविष्यतीति किमनुमानप्रामाण्येनेत्यपि समाधत्ताम् ॥ ३५ ॥

**यदनुमिनोमीति दृढानुभवो भिन्तेऽनुमां समेति वचः।**
**तदुपमिनोमीति दृढानुभवोऽप्युपमामुपमयैव ॥ ३६ ॥**

यदि 'मैं अनुमान करता हूँ' इस अनुभव के अनुरोध से उपनीतभान की अपेक्षा अनुमिति को पृथक् मानना संगत है, तो 'मैं उपमान करता हूँ' यह अनुभव उपमा को भी उससे भिन्न उसी तरह उपमा से ही सिद्ध करेगा ॥ ३६ ॥

अनुमिनोमीति दृढानुव्यवसायोऽनुमामुपनीतभानाद् भिनत्तीति यद् वचस्तद् उपमिनोमीति दृढानुव्यसायोऽप्युपमां भिनत्तीति साधयति। कथम् ? उपमयैव। दृढानुव्यवसायविषयानुमानौपम्येन प्रमाणान्तरत्वमुपमानस्योपमिनोमीत्यनुभवात्। एतच्च सर्वं भाष्ये बहुतरोदाहरणप्रदर्शनतात्पर्यलभ्यमिति ध्येयम् ॥ ३६ ॥

**आप्तोपदेशः शब्दः ( न्या० १.१.७ )**

**आप्तोपदेश उक्तः शब्दस्तद्धीर्भवेत् प्रमाकरणम्।**
**साक्षात्कृतधर्माणस्त्वाप्ता वाक्यार्थधीश्च फलम् ॥ ३७ ॥**

वाक्यरूप आप्तोपदेश शब्द कहा जाता है व उसके ज्ञान को शाब्दी प्रमा का करण कहते हैं। वक्तव्य अर्थ को जिन्होंने प्रमाण से निश्चित कर लिया है, वे आप्त हैं। शब्दप्रमाण का फल वाक्यार्थबोध होता है।

आप्तोपदेशो वाक्यरूपः शब्दस्तज्ज्ञानं प्रमाकरणम्। न तु पदज्ञानमेव लघवानुसरणे त्वक्षरज्ञानं प्रमाणं मा भूदिति प्राञ्चः। साक्षात्कृतवक्तव्यार्था आप्ताः। क्वचिदादिवक्तुः साक्षात्कृतत्वात्तद्वाक्यसाजात्येनाप्तोपदेशत्वम्। साक्षात्कृतत्वं प्रमाणनिश्चितत्वमेव। धूमाद्वह्निमनुमाय पर्वतोऽयं वह्निमानिति वचनस्यापि प्रमाणत्वात्। इत्थं च धर्मः स्वर्गस्य कारणमित्यादिवृद्धोपदेशस्यापि प्रामाण्यमेव। तथा गामानयेत्यादिवाक्यानामपि प्रामाण्यमिति यथार्थवक्तृत्वमेवाप्तत्वं निष्कर्षितम्। इह वटे यक्षस्तिष्ठतीत्यादिवाक्यानामाप्तोक्तत्वतदभावाभ्यां प्रामाण्याप्रामाण्यव्यवस्थेति ऐतिह्यस्य प्रमाणान्तरत्वनिरासः। वाक्यार्थबोधः फलम्॥ ३७॥

**वृत्त्या पदजन्यार्थोपस्थितिरत्रोपगम्यते द्वारम्।**
**वृत्तिर्नाम पदानां शक्तिर्वा लक्षणा वाऽर्थे॥ ३८॥**

पदों से वृत्ति द्वारा पदार्थों की उपस्थिति को व्यापार माना जाता है। पद की पदार्थ में शक्ति को तथा लक्षणा को वृत्ति कहा जाता है॥ ३८॥

वृत्त्या पदजन्यपदार्थस्मरणं व्यापारः। वृत्तिः पदानामर्थे शक्तिलक्षणान्यतरसम्बन्धः। तत्रैकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति पदेन पदार्थोपस्थितिर्भवेत्॥ ३८॥

**आद्या मुख्येदं पदमिममर्थं बोधयत्वितीशेच्छा।**
**शक्तिः स्यादर्थोऽयं बोद्धव्योऽस्मात्पदादिति वा॥ ३९॥**

'यह पद इस अर्थ का ज्ञान करावे'—ऐसी इश्वरेच्छा शक्ति है। किन्हीं के मत में 'यह अर्थ इस पद से जानना चाहिये'—ऐसी इच्छामात्र को शक्ति कहते हैं। शक्ति ही मुख्य वृत्ति है॥ ३९॥

पदमिति शक्तं शक्त्याश्रयभूतमुच्यते। शक्तिस्तु इदं पदमिममर्थं बोधयत्विति पदमुख्यविशेष्यिका, अस्मात्पदादयमर्थो बोद्धव्य इत्यर्थमुख्यविशेष्यिका वेश्वरेच्छा भवेत्। परे त्विच्छामात्रं शक्तिः। न चैवं घटपदात्पटो बोद्धव्य इत्याधुनिकेच्छया तस्य तत्रापि शक्तिः स्यादिति वाच्यम्। अनादिपरम्परासिद्धेच्छायाः शक्तित्वात्। अनादिपरम्परासिद्धत्वं चेतरार्थविषयकपूर्वसिद्धेच्छाऽविषयत्वम्। तेनाधुनिकनिर्मितवस्तुष्वपि तत्तत्पदशक्तिसिद्धिः। साधुत्वमपि निवेश्यम्। तेनासाधुपदेषु नाधुनिकसंकेतप्रयुक्तशक्तिरित्याहुः॥३९॥

**व्याकरणादुपमानात् कोशादाप्तोक्तितो व्यवहृतेश्च ।**
**शक्तिग्रहस्तु विवृतेः सांनिध्याद्वाक्यशेषाच्च ॥ ४० ॥**

शक्तिग्रह व्याकरण से, उपमान से, कोश से, आप्तोक्ति से, व्यवहार से, व्याख्या से, संनिधि से व वाक्यशेष से होता है ॥ ४० ॥

शक्तं पदमित्युक्तं, कथं शक्तिग्रहो भवतीत्यत आह—व्याकरणादिति। प्रकृतिप्रत्ययाद्यर्थबोधो व्याकरणाद् भवति। न्यायसहकृतादिति द्रष्टव्यम्। तेनाख्यातस्य कर्तरि शक्तिसाधनेऽपि कृतावेव लाघवात् सिध्यति। देवदत्तः पचतीत्यस्य वर्तमानकालीनपाककर्ता देवदत्त इति वैयाकरणमते बोधः। वर्तमानार्थवृत्तेर्धातोर्लट् स्यादिति तैर्व्याख्यानात्तिब्द्योत्यवर्तमानत्वं धात्वर्थ-विशेषणम्। परंतु एकप्रत्ययोपात्तवर्तमानत्वकृत्योरेव परस्परान्वयो युक्तः। अन्यथा पाकस्य वर्तमानत्वे तदनुकूलाकृतिः पूर्वकाले स्यादिति भूतकालीन-कृतिमत्त्वं प्रतीयेत। नामार्थयोरभेदान्वयनियमेऽपि प्रत्ययार्थनामार्थयोर्भेदे-नान्वयसंभवात्तिबर्थकृतेराश्रयतया देवदत्तेऽन्वयः इति पाकानुकूलवर्तमान-कृतिमान् देवदत्त इत्येव न्यायमतेन बोधः। न चैवं कर्तुरनभिधानत्तत्र तृतीया स्यादिति वाच्यम् स्वार्थान्वयानुयोगित्वस्याभिहितपदार्थत्वात्। अन्वयस्तु तिङि समवायादिना। कृति त्वभेदेन। यत्तु कर्मत्वाद्यनवरुद्धः प्रथमान्तपदोपस्थाप्योऽभिहितकर्ता, तदन्योऽनभिहित इति व्याख्यानम्। तन्न। अनभिहितत्वबोधे प्रथमान्तपदोपस्थाप्यत्वबोधस्तस्मिन् सत्यन-भिहितत्वावगम इत्यन्योन्याश्रयात्। कर्तृकरणयोस्तृतीयेत्यनभिहित्वबोधोत्त-रत्वात्। अन्यथा प्रातिपदिकार्थमात्रे प्रथमापत्तेः। अभिहितकर्माऽसंग्रहो-ऽप्यत्र। उपमानाद् यथा शक्तिग्रहस्तथोक्तम्। अमरा निर्जरा देवा इत्यादि-कोशादमरादिपदानां देवादौ शक्तिग्रहः। यत्तु गुणशक्तौ लाघवाद् गुणिनि लक्षणयैवोपपत्तौ गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वतीत्यादिकोशो-ऽप्रामाणिक इति। तच्चिन्त्यम्। तीरे लक्षणामात्रेण गङ्गाशब्दस्य पुंस्त्वाद्यदर्शनात्। न च विशेष्यविरहान्न पुंस्त्वमिति वाच्यम्। यत्र गङ्गा-पदस्य गङ्गासम्बन्धिमात्रलक्षणा तत्र गङ्गायां तीरे इत्यत्र पुंस्त्वापत्तेः। तथापि द्विजादिपदानां योगरूढ्या त्रैवर्णिकत्वेन केवलब्राह्मणे लक्षणयैव प्रयोगसंभवात्तत्र पृथक्शक्तिकथनं कोशकाराणां नोपगन्तव्यम्। आप्त-वाक्याद्—अस्य शब्दस्यायमर्थ इत्येवंविधाच्छक्तिग्रहोऽध्यापनादिस्थले। व्यवहृतेश्चेति। कारयितृवचनं कर्तृप्रवृत्तिं चोपलभ्यैतदीयगामानयेति

वचनप्रयुक्ताऽस्य गवानयनप्रवृत्तिरित्यनुमायास्य वाक्यस्य गवानयनमर्थं इति च निश्चित्य घटमानयाश्वं बधानेत्यादिष्वावापोद्वापाभ्यां तत्तत्पदानां तत्तदर्थशक्तिनिश्चयो व्यवहारात्। तत्र क्रियान्वितस्वार्थे शक्तिः, पदार्थान्तरान्वितस्वार्थे शक्तिः, अन्वितार्थे शक्तिरिति मतत्रयमपहाय लाघवात्स्वार्थमात्रे शक्तिरवधार्यते। विवृतेरिति। यद्यप्याप्तोक्तिविवृत्योर्न भेदः प्रतीयते तथापि पुरतः स्थितं घटमुद्दिश्यायं घट इत्युच्यत इत्याप्तोक्तिः। घटः कलश इति विवृतिः। तत्राज्ञातपदान्तरकेऽर्थे आप्तोक्तिः शरणम्। ज्ञातपदान्तरस्य तेन पदेन विवृतिः संभवतीति विशेषो द्रष्टव्यः। इह सहकारतरौ मधुरं पिको रौतीत्यादौ प्रसिद्धेतरपदसांनिध्यात्पिकादिपदानां कोकिले शक्तिग्रहः। वाक्यशेषात् क्वचिद्वेदेषु यववराहादिपदानां तत्तदर्थे शक्तिग्रहः। लोकेऽपि नित्यचञ्चलदलः स्मार्तजनपूज्यः इत्यादिवाक्यैः पिप्पलं प्रदक्षिणीकुर्वित्यादेर्वाक्यशेषभूतैः पिप्पलादिपदशक्तिग्रहो भवति। वस्तुतस्त्विदं वैधर्म्योपमानान्तर्गतमेव स्वीकार्यम्। अन्यथा प्रमाणान्तरतापत्तेः। एतच्चोपमानग्रन्थतात्पर्यटीकायां सूचितम्।

जात्याकृतिव्यक्तयस्तु पदार्थ इति सूत्रकारोक्तेस्त्रिषु शक्तिः। जातिर्गोत्वादिः। आकृतिरवयवसंस्थानविशेषः। व्यक्तिर्गवादिः। मीमांसकास्तु लाघवाज्जातावेव शक्तिः। व्यक्तिं विना जातिभानासंभवाद् व्यक्तेरपि भानम्। जात्यभिव्यञ्जिकाऽऽकृतिरिति तस्या अपि भानमिति। न च गौः शक्येति शक्तिग्रहे गवि शक्तिः। गोत्वं शक्यमिति ग्रहे गोत्वत्वं शक्यतावच्छेदकं स्यात्। तच्च गवेतरावृत्तित्वविशिष्टनिखिलगोवृत्तित्वरूपमिति गौरवमिति वाच्यम्। गौः शक्येत्यत्र भवतापि जातौ गोत्वत्वभानमन्तरेण स्वरूपतः शक्तिस्वीकारात्। सूत्रपरित्यागेन शक्यतावच्छेदकत्वमात्रं गोत्वादौ भवता कल्प्यते तदापि शक्तिः स्वरूपतो न भातीति का नाम वाचोयुक्तिः। न च गौः शक्येतिवद्गौर्नित्येत्यपि प्रयोगः स्यादिति वाच्यम्। यतो न हि गौः शक्येति शब्दप्रयोगमाश्रित्य शक्तिग्रहः। तत्र गोपदस्य गवार्थकत्वे ज्ञाते गौः शक्येति प्रयोगवैयर्थ्यात्। किन्तु प्रतीत्युल्लेखमात्रं बोधनाय क्रियते। तत्र तव शक्यतावच्छेदकत्वादिवच्छक्तेरपि पदार्थान्तरस्य स्वरूपतो गोत्वादौ भानमुपगम्यते। न तु नित्यत्वादीनाम्। न च गौरिति गोत्वमिति च पदयोरेकार्थत्वापत्तिः। प्रथमे स्वरूपसतो गोत्वस्योपस्थितिः। द्वितीये गोत्वत्वेन गोत्वोपस्थितिरिति भेदात्। अत्रोच्यते। विनैव शक्तिमर्थभानस्य स्वीकारे रूपमित्युक्ते द्रव्यं विना रूपासंभवाद् रूपवतः प्रतीत्यापत्तिः।

गोत्वमानयेत्यादावपि गवानयनप्रत्ययापत्तिः। न च निष्कृष्योच्चारणस्थले न तदाश्रयप्रत्यय इति वाच्यम्। यतः किमिदं निष्कृष्योच्चारणम्? द्रव्याद् पृथक्कृत्य कथनं यदि तदा गौरित्यादौ संनिपत्योच्चारणमिति फलितम्। गोव्यक्तिरप्युच्यत इति यावत्। तदा सिद्धा व्यक्तौ शक्तिः। न ह्यन्यादृशं मिलितोच्चारणं, शब्दार्थयोः सम्बन्धान्तरविरहात्॥ ४०॥

**[1]शक्तं तु पदं रूढं यौगिकमपि योगरूढमपि चोक्तम्।**
**आद्यं गौरित्यपरं पाचक इति पङ्कजं चरमम्॥ ४१॥**

पद शक्ति का आश्रय होता है। वह तीन प्रकार का है (१) रूढ, (२) यौगिक, (३) योगरूढ। 'गाय', 'पाचक', व 'पंकज' ये तीनों क्रमशः उदाहरण समझने चाहिये।

शक्त्याश्रय एव पदम्। शक्तिरहितं केवललक्षकं पदं नास्त्येव। तत्त्रिविधं रूढं यौगिकं योगरूढमिति। गौः घटः पट इत्यादिकं रूढम्। पाचक इत्यादौ प्रकृतिप्रत्ययार्थबोधाद्यौगिकम्। पङ्कजमित्यादौ पङ्कजनिकर्तृपद्मत्वावच्छिन्नबोधाद्योगरूढम्। यौगिकरूढं चतुर्थमपि केचित्। तन्न। नानार्थत्वादेकदा युगपद् विशिष्टार्थाप्रतीतेः। यथा ह्युद्भिदादिपदं भूम्युद्भेदनकर्तृ लतागुल्मादिकं यागविशेषं च पृथगेव ब्रवीति। अन्यथा रूढरूढं यौगिकयौगिकादिकं च पृथग्वक्तव्यम्। हर्यादिपदानां विष्णुवानराद्यर्थत्वात्। वसनादिपदानां वस्तेऽनेन उष्यतेऽस्मिन्निति योगद्वयेन वस्त्रगृहाद्यर्थत्वात्। न चोभयार्थान्वितबोधो नात्र भवतीति वाच्यम्। उद्भिदादिपदेऽपि तुल्यत्वात्॥ ४१॥

**वृत्तिस्तु लक्षणाख्या तात्पर्याद् भवति शक्यसम्बन्धः।**
**जहती चाजहती चाप्यथ जहदजहत्यपि क्वचन॥ ४२॥**

शक्यसम्बन्ध लक्षणा नामक वृत्ति है जिसकी उपस्थिति तात्पर्यवशात् होती है। जहती व अजहती भेद से लक्षणा दो प्रकार की, व कहीं जहदजहती नामक तृतीय प्रकार की भी स्वीकार्य है।

शक्यसम्बन्धो लक्षणा नाम वृत्तिः। वक्तृतात्पर्यानुगामिनी सा तात्पर्यवशेन तदुपस्थितिः। तात्पर्यानुपपत्तिस्तु न व्यापकं लक्षणाबीजम्।

---

१. पाठान्तर—शक्तं तु पदं त्रिविधं योगाद्रूढेश्च योगरूढेश्च।
पाचक इति पङ्क इति च पङ्कजमिति चापि तत्क्रमशः॥

निरूढलक्षणास्थले तात्पर्यानुपपत्त्यनुसन्धानं विनापि लक्षणादर्शनात्। क्वचित्तात्पर्यसंस्कारादेव लक्षणेति तात्पर्यज्ञानपर्यन्तमपि नाश्रयितव्यम्। स्वार्थपरित्यागे गङ्गायां घोष इत्यत्र तीरबोधाज्जहती लक्षणा। गङ्गातीरलक्षणायां तत्रैवाजहती। सोऽयं देवदत्त इत्यादौ तत्कालैतत्कालविशिष्टयोरैक्यासंभवाज्जहदजहतीति वेदान्तिनः। विशिष्टशुद्धादेरैक्यान्नास्ति लक्षणेति नैयायिकाः। परन्तु पूर्वं मूर्खः पश्चात्पण्डितो यस्तत्र मूर्खपण्डित इति व्यवहारो न भवति। बाल एव वृद्धो जात इति बालोऽयं वृद्ध इति न भवति। तत् कुतः? उद्देश्यतावच्छेदकदेशकालावच्छेद्यत्वस्य विधेये भाननियमात्। तदा सोऽयमित्यपि कथं स्यात्? उद्देश्यतावच्छेदकतद्देशकालावच्छेद्यत्वस्य विधेये विरहादिति कथं न लक्षणा वक्तव्या? किं च काकेभ्यो दधि रक्ष्यतामित्यत्र काकत्वपरित्यागेन दध्युपघातकत्वपूर्वकबोधो भवति। शुनकरक्षणमात्रेणापि वक्त्रादेशपरिपालनबुद्ध्युत्पादाद् बालस्य। तथा च तत्रापि जहदजहत्येव लक्षणा ॥ ४२ ॥

**शक्तिर्मुख्या वृत्तिर्योगाद्रूढिर्बलीयसी भवति।**
**लाक्षणिकादिर्नार्थस्तस्मात्सति संभवे वेदे ॥ ४३ ॥**

वृत्तियों में शक्ति मुख्य है। शक्ति में भी योगार्थबोधकता की अपेक्षा रूढ्यर्थबोधकता बलवती होती है। अतः वेद में यथासंभव लाक्षणिक आदि अर्थ अस्वीकार्य हैं ॥४३॥

अत्र वृत्तिद्वये मुख्या वृत्तिः शक्तिर्लक्षणा तु जघन्या। तथा च विधौ न परः शब्दार्थं इति सिद्धान्तः संगच्छेत। परः = लाक्षणिकः शब्दार्थो न भवतीत्यर्थः। उपस्थितिलाघवात्। तात्पर्यानुपपत्तौ गत्यन्तराभावे लक्षणाभ्युपगमः। अन्यथा वेदार्थाऽनियमप्रसङ्गात्। लौकिककाव्यादौ क्वचिल्लक्षणादेर्महीयस्त्वं स्वीक्रियते। शैत्यपावनत्वादिव्यञ्जनार्थतया गङ्गायां घोष इत्यादिप्रयोगात्। प्रयोजनविशेषविरहे तु लोकेऽपि दोष एव। इमां व्यञ्जनावृत्तिमतिरिक्तां केचिन्मन्यते। शैत्यादिव्यञ्जनात्। परन्तु शाब्दबोधे व्यङ्ग्यार्थस्य न भानम्। शैत्यादिबोधस्य पार्ष्ठिकत्वात्। ततश्च गङ्गाप्रवाहार्थोपस्थापितशैत्यादिनैव तदुपपत्तौ वृत्तेरनुपयोग एव। यदि शैत्यपावनत्वादिविशिष्टस्तीरो वा घोषो वाऽर्थस्तदा लक्षणैव। शक्तेर्मुख्यत्वादेव निषादस्थपतिं याजयेदित्यादौ कर्मधारयसमासोपगमः। निषादस्य तावत्कर्मोप-

योगिवेदाध्ययनकल्पना च। अन्यथा निषादस्य स्थपतिर्द्विजातिरेव गृह्येत। षष्ठीतत्पुरुषे पूर्वपदे लक्षणास्वीकारात्। राजसम्बन्धिनि राजपदलक्षणा राजपुरुषादिपदे नामार्थयोरभेदान्वयात्। लुप्तषष्ठ्यनुसन्धाननियमे मानाभावाच्च। शक्तावपि योगापेक्षया रूढेर्बलीयस्त्वम्। यौगिकार्थस्य विलम्बोपस्थितिकत्वात्। अत एवानार्यरूढानां पिकादिपदानां कोकिलार्थत्वमेव गृह्यते। न तु योगप्राप्यमर्थान्तरम्। यत्र तु शक्यार्थरूढ्यर्थौ न संभवतस्तत्र लाक्षणिकयौगिकार्थयोर्ग्रहणम्। यथाऽर्थवादवाक्यानाम् ॥ ४३ ॥

**शाब्दप्रमिताव्वाहुर्हेतूनासत्तियोग्यताकाङ्क्षाः ।**
**तात्पर्यज्ञानमपि च यैर्युक्तो बोधयेच्छब्दः ॥ ४४ ॥**

शाब्द प्रमिति के प्रति आसत्ति, योग्यता, आकांक्षा व तात्पर्य ज्ञान कारण हैं जिनसे युक्त हो शब्द बोधोत्पादक होता है ॥ ४४ ॥

शाब्दबोधं प्रत्यासत्तियोग्यताकाङ्क्षातात्पर्यज्ञानानि चत्वारि पृथक्कारणानि। तात्पर्यज्ञानं क्वचिदेवार्थसन्देहे कारणमिति केचित्। एतैर्युक्तः शब्दो बोधकारणम् ॥ ४४ ॥

**पदसंनिधिरासत्तिर्योग्यत्वं तत्तदर्थसम्बन्धः[1] ।**
**स्यात्कारकक्रियादेराकाङ्क्षा वक्तुरिच्छान्त्या ॥ ४५ ॥**

पदों की संनिधि आसत्ति है। पदों के अर्थ का बाधदोषरहित होना योग्यता है। क्रिया, कारक आदि की अपेक्षा होना आकांक्षा कही जाती है। वक्ता की इच्छा को तात्पर्य कहते हैं ॥ ४५ ॥

विलम्बेन व्यवधानेन वोच्चारितैः शब्दैर्बोधादर्शनात्पदानामविलम्बेनाव्यवधानेन चोपस्थितिरूपासत्तिस्तत्र कारणम्। अर्थाबाधो योग्यता। तेन वह्निना सिञ्चेत्यादिवाक्यान्न बोधः। घटः कर्मत्वमानयनं कृतिरित्यादौ बोधादर्शनाद् घटपदोत्तराऽम्पदादिकमाकाङ्क्षेति केचित्। तन्न। नामार्थयोरभेदान्वयनियमेन तेन विवक्षितार्थप्रतीत्यसंभावात्। तस्मात्क्रियाकारकाद्याकाङ्क्षैवाकाङ्क्षापदार्थः। तत्र क्वचिदेकतराकाङ्क्षा। तत्रापि क्वचिदुत्थिताकाङ्क्षा क्वचिदुत्थाप्याकाङ्क्षा। घटमित्यादेरुत्थिताकाङ्क्षा। नीलो घटः अस्ति इत्यादौ घटः कीदृश इत्युत्थाप्याकाङ्क्षा। आकाङ्क्षावशाच्च

---

१. पाठान्तर-त्वार्थबाधराहित्यम्।

शाब्दबोधे एकपदार्थेऽपरापदार्थः संसर्गमर्यादया भाति। न चैवं स्मृत्येव पदार्थोपस्थितेरपूर्वः संसर्ग एवेति तद्बोधकाकाङ्क्षाया एव प्रमाणत्वं स्यान्न पदज्ञानादेरिति वाच्यम्। आनयनं कस्य ? गोः, गोः किमभूद् ? आनयनमित्येवं विनैव पदं मानसाकाङ्क्षामात्रेण शाब्दबोधादर्शनात्पदानामेव प्रमाणत्वात्। आकाङ्क्षादेः सहकारितामात्रत्वनिश्चयात्। तात्पर्यं तत्प्रतीतीच्छयोच्चरितत्वम्। तच्च क्वचिद्धेतुः। प्रकरणादिना तात्पर्यनिश्चयः ॥४५॥

**परमं प्रमाणमाहुर्वेदान् परमाप्तभगवदुक्तित्वात्।**
**कथमस्य पुरुषदोषाः संभाव्यन्तां जगज्जनितुः ॥ ४६ ॥**

परम आप्त श्रीभगवान् द्वारा कहे होने से वेद परम प्रमाण हैं। सम्पूर्ण जगत् को पैदा करने वाले में सामान्य पुरुषों में होने वाले भ्रमादि दोष असम्भव हैं ॥४६॥

लौकिकवाक्यान्याप्तोक्तानि प्रमाणानि। तथापि क्वचित्पौरुषेयदोषाः संभवन्ति। वेदाः पुनः परमप्रमाणरूपाः। कुतः ? परमाप्तस्य भगवत उक्तित्वात्। सकलजगज्जनितुः पुरुषदोषा अज्ञानसंशयविप्रलिप्सादयः कथमस्य भगवतः संभाव्यन्ताम्। धर्मिग्राहकमानेन सर्वज्ञनिर्दोषपरमेश्वरसिद्धेः। तेन पौरुषेयत्वेनाप्रामाण्यं न शक्यमापादमितुं मीमांसकैः ॥ ४६ ॥

**ननु फलसाधनरूपं धातेदमकल्पयद्यथापूर्वम्।**
**तद्बोधकवेदानां तद्वदनादित्वमेव भवेत् ॥ ४७ ॥**

शङ्का—फल व साधन रूप यह सारा संसार विधाता ने पूर्व-पूर्व कल्प के अनुसार ही बनाया है जिससे कि संसार अनादि सिद्ध होता है। अतः जगत्प्रतिपादक वेद भी जगत् की तरह ही अनादि होना चाहिये ॥ ४७ ॥

मीमांसकः शङ्कते—नन्विति। यज्ञादिकं हिंसादिकं च साधनरूपम्। स्वर्गनरकसुखदुःखतत्साधनादिकं, किं बहुना सकलमेव कार्यजातमदृष्टजन्यत्वात्फलरूपम्। न हि तत्र कश्चन भेदः कस्मिंश्चिदपि कल्पे। धाता यथापूर्वमकल्पयदिति श्रुतेः। न हि कदाचिदपि ज्योतिष्टोमेन नरको, हिंसया स्वर्गश्च। न च कदाचिदग्निः क्लेदयति हिमं च दहति। न वा भिद्यन्ते। तथा चानादिप्रवृत्तकार्यकारणफलसाधनाद्यात्मकजगत्प्रतिपादकवेदानां कथं सादित्वम् ? वर्तमानानुपूर्वीव्यतिरिक्तानुपूर्वीकवेदकल्पनायां गौरवान्निष्फलत्वाच्च तद्भेदासिद्धेः। न हि समानानुपूर्वीकवेदोप-

देशेनेश्वरस्य तत्कर्तृत्वसिद्धिसंभवः। तथा सत्यध्यापकानामपि वेदकर्तृत्वापत्तेः। तथा च समानानुपूर्व्या सकलकल्पेष्वीश्वरस्य वेदोपदेशादीशकर्तृकत्वं दुर्घटमेव वेदानामिति सेश्वरमीमांसकानां वेदान्तिनां मतम्। पूर्वतन्त्रे ईश्वरानभ्युपगमात् प्रलयाऽस्वीकार एवेति तु विशेषः॥ ४७॥

**सत्यमनन्ता न परिच्छिद्यन्तेऽर्था दशायुतैर्मन्त्रैः।**
**यदि चानन्ता वेदाः सादित्वं तत्र दुःसाधम्॥ ४८॥**

परिहार—ठीक है; परन्तु विषय तो अनन्त हैं और वेद केवल एक लाख मन्त्रों में परिच्छिन्न हैं, अतः वे समस्त विषयों का बोध नहीं करा सकते जिससे कि नूतन अर्थ के बोधक वेद वाक्यों का आरम्भ मानना होगा। उन्हें अनन्त मानने पर यह सिद्ध नहीं होगा॥ ४८॥

सत्यं धाता यथापूर्वमकल्पयदिति। किन्त्वर्थानामानन्त्याद् वेदानां च लक्षसंख्याकमन्त्रपरिच्छिन्नत्वान्न सर्वेऽर्थास्तैः परिच्छिद्यन्त इति प्रतिकल्पनूतनाद्यर्थबोधकवेदवाक्यानां सादित्वमङ्गीकर्तव्यमेव। अन्यथाऽनिर्मोक्षप्रसङ्गात्। मुक्तामुक्तभेदस्यापि विरहापत्तेः। यदि पुन 'रनन्ता वै वेदा'' इति शातपथश्रुत्या ईश्वरज्ञानवदेवानन्तविषयकत्वं वेदानामनन्ताश्च मन्त्रास्तदा वेदानां सादित्वं दुःसाधमेव। न हि गायत्र्यादयो मन्त्राः पूर्वकल्पे नासन्, सन्तो वा भिन्नानुपूर्वीका इति शक्यं कल्पयितुम्। ''तस्मात्तपस्तेपनात्त्रयो वेदा अजायन्ते'' त्यादिश्रुतिरपि प्रादुर्भावमात्रपरेत्यास्तां विस्तरः॥ ४८॥

**अर्थापत्तिर्न पृथग् व्यतिरेक्यनुमानतः प्रमाणं स्यात्।**
**नानुलब्धिश्च तथा प्रत्यक्षत्वादभावस्य॥ ४९॥**

व्यतिरेकि अनुमान से पृथक् अर्थापत्ति कोई प्रमाण नहीं। एवं अभाव का प्रत्यक्ष स्वीकृत होने से अनुपलब्धि भी अलग प्रमाण नहीं॥ ४९॥

पीनो देवदत्तो दिवा न भुङ्क्त इत्यादावर्थाद्रात्रिभोजनकल्पना या सा व्यतिरेक्यनुमानतो न भिद्यत इत्यर्थापत्तिर्न पृथक् प्रमाणम्। अभावबोधिकानुपलब्धिरपि प्रमाणोपकारकत्वान्न प्रमाणान्तरम्। प्रत्यक्षेणैवाभावसिद्धेः॥ ४९॥

**इति प्रमाणनिरूपणं नाम तृतीयं प्रकरणम्**

# अथ प्रमेयनिरूपणम्

**आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्**
**( न्या० १.१.९ )**

**आत्मा शरीरमिन्द्रियमर्थो बुद्धिर्मनः प्रवृत्तिरपि ।**
**दोषः प्रेत्यागतिफलदुःखविमोक्षाः प्रमेयं स्युः ।। १ ॥**

आत्मा, शरीर, इन्द्रिय, विषय, बुद्धि, मन, प्रवृत्ति, दोष, प्रेत्यभाव, फल, दुःख और अपवर्ग—ये प्रमेय हैं ॥ १ ॥

आत्मादयः प्रमेयम् । ननु द्रव्यगुणादयोऽपि प्रमेयमिति चेन्न । द्रव्यादीनामवश्यप्रमातव्यत्वविरहात् । आत्मा तु प्रमातव्यः । "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्य" इत्यादिश्रुतेः । शरीरेन्द्रियबुद्धिमनःसु आत्मतादात्म्याध्यासात्संसारप्रतिपत्तिरिति तेभ्यो विविच्य आत्मा ज्ञातव्य इति तेऽपि प्रमातव्या एव । गन्धरसादीनर्थानात्मसात्कृत्य तत्र लोका मुह्यन्तीति तेषामपि प्रमातव्यता । प्रवृत्तिरेव जन्मकारणयिति विद्याध्ययनादिप्रवृत्तेर्मोक्षकारणस्य ततः पृथक्कृत्य ज्ञानमावश्यकम् । तथैव दोषादयोऽपि । घटादिलक्षणपृथिव्यादिद्रव्याणां प्रमातव्यत्वं नास्ति । न च प्रमाणसंशयप्रयोजनादीनां शेषपञ्चदशपदार्थानां प्रमातव्यत्वमत्रैवोपदेशादिति आत्मादीनामेव प्रमेयत्वकथनमयुक्तमिति वाच्यम् । आत्मादिप्रमित्युपयोगितया तेषां तत्त्वज्ञानस्योपकारित्वेऽपि प्रमातव्यत्वविरहात् । तज्ज्ञानस्यात्मादिप्रमित्युपयोगिशास्त्रार्थकरणमात्रोपयोगित्वात् । एतच्च दर्शितं भाष्ये— "अस्य तु तत्त्वज्ञानान्मोक्षो मिथ्याज्ञानात्संसार इत्यत एतदुपदिष्टं विशेषेणे"ति । न हि रज्जुं सर्पत्वेन कदाचिज्जानतः मोक्षप्रतिबन्धोऽस्ति ॥ १ ॥

**इच्छाद्वेषसुखदुःखज्ञानान्यात्मनो लिङ्गम् ( न्या० १.१.१० )**

**इच्छादिलिङ्ग आत्मा सुख्यहमित्यादिरीतितोऽध्यक्षः ।**
**न वपुर्मृताऽप्रवृत्तेर्न खमुपघातेऽपि च स्मरणात् ।। २ ।।**

इच्छादि लिंगों से आत्मास्तितता सिद्ध होती है । 'मैं सुखी हूँ' आदि अनुभव में आत्मा का प्रत्यक्ष होता है । शरीर आत्मा नहीं, क्योंकि मृत्यु के बाद उसमें प्रवृत्ति नहीं होती । इन्द्रिय भी आत्मा नहीं क्योंकि उस उस इन्द्रिय के नष्ट हो जाने पर भी उसके द्वारा अनुभूत अर्थ का स्मरण बना रहता है ॥ २ ॥

इच्छादीति। नन्वात्मनो मानसप्रत्यक्षत्वादिच्छाद्यनुमेयत्वकथनमनर्थकमिति चेन्न। तस्य सर्वथा प्रत्यक्षत्वे वादिनां विप्रतिपत्त्यनुपपत्तेः। तस्मात्तदस्तितताविप्रतिपन्नं प्रति प्रथमं तदस्तित्वमनुमानेनैव साधनीयम्। परशरीरे च प्रवृत्त्यादिनानुमेय आत्मा। एवं लिङ्गेनात्मास्तित्वे सिद्धे तत्प्रत्यक्षत्वमपि सुवचमित्याह—सुख्यहमिति। ननु शरीरादेरेवेच्छाद्याश्रयत्वमहंप्रत्ययगोचरत्वं चास्त्वित्यत आह—न वपुरिति। मृतशरीरस्यापि वपुष्ट्वात्तत्रात्मसत्त्वे प्रवृत्त्याद्यापत्तेः। नापि खमिन्द्रियमात्मा। तत्तदिन्द्रियोपघातेऽपि तदनुभूतार्थस्मरणदर्शनात्। अपिना योऽहमद्राक्षं सोऽहं स्पृशामीति प्रत्यभिज्ञानात् ॥ २॥

**न मनो ज्ञानादीनामणुधर्मत्वे भवेन्न चाध्यक्षम्।**
**सांशत्वेऽनित्यत्वाद्दोषः कृतविप्रणाशादि ॥ ३ ॥**

मन भी आत्मा नहीं, अन्यथा अणुरूप मन के धर्म होने पर ज्ञानादि का प्रत्यक्ष न हो सकेगा। मन को सांश मानने पर उसे अनित्य मानना होगा जिसे कृतनाश और अकृतागम दोष प्राप्त हो जायेंगे ॥ ३ ॥

मनोऽपि नात्मा। ज्ञानादीनामणुलक्षणमनोधर्मत्वे तत्प्रत्यक्षं न स्यात्। यदि सांशं महन्मनः स्यात्तदाऽनित्यत्वेन कृतविप्रणाशाकृताभ्यागमदोषौ स्याताम्। न चाप्रत्यक्षगगनगुणशब्दादेरिव योग्यत्वमेव प्रत्यक्षत्वे तन्त्रमिति वाच्यम्। अणोरयोग्यत्वेनाऽप्रत्यक्षत्वात्। करणान्तरविरहाच्च ॥ ३ ॥

**क्षणिकं ज्ञानं नाम्ना कथमनुभवितुर्मृतौ भवेत्स्मरणम्।**
**संस्कारसंक्रमश्चेत् स्थायी संस्कार एव स्यात् ॥ ४ ॥**

क्षणिक विज्ञान आत्मा नहीं, क्योंकि वैसा होने पर स्मरण अनुपपन्न होगा। यदि विज्ञानों में संस्कार-संक्रमण से स्मरणोपपत्ति बनावे, तो संस्कार को स्थायी मानना पड़ेगा, जो इष्ट नहीं ॥४॥

क्षणभङ्गुरा अर्थाः क्षणिकं ज्ञानमात्मेति वैनाशिकमतमयुक्तम्। क्षणिकविज्ञानस्यात्मत्वे क्षणोत्तरमनुभवितुर्मृतौ स्मरणं कथं कस्य स्यात्। यदि द्वितीयादिज्ञाने संस्कारसंक्रमः स्वीक्रियते तदा संस्कार एव स्थाय्यक्षणिक आपद्यते ॥ ४ ॥

**जायेत वासना चेत्सदृशी तर्हि स्थिरं सदृक्त्वं स्यात् ।**
**अपि वा सकलस्मरणं विसदृशविज्ञानविरहश्च ॥ ५ ॥**

यदि मानें कि समान संस्कारान्तर उत्पन्न होता है तो भी सादृश्य को स्थायी मानना होगा, अन्यथा अनुभूत-अननुभूत सभी का स्मरण होने लगेगा, विसदृश ज्ञान भी नहीं होगा ॥ ५ ॥

न संस्कारः संक्रामति। सदृशं संस्कारान्तरमुत्पद्यत इति चेन्न। तद्गतधर्मवत्वेनैव सादृश्यस्य वक्तव्यत्वात्तस्य चोभयवर्तित्वेनाक्षणिकत्वापत्तेः। स्थायिनः सदृक्त्वस्य विरहे च विनिगमनाविरहात्सकलजगत्संस्कार उत्पद्येतेति सार्वज्ञं सर्वस्मरणात्मकं स्यात्। घटज्ञानोत्तरं पटादिविषयकं विसदृशज्ञानमपि न स्यात् ॥ ५ ॥

**इष्टनिदानत्वधिया रागः सद्योभुवो भवेत्स्तन्ये ।**
**न हि वीतरागजन्म क्वचिदपि दृष्टं स नित्योऽतः ॥ ६ ॥**

सद्योजात शिशु को भी इष्टसाधनता ज्ञान से स्तनपानराग होता है। वीतराग बालक का जन्म कहीं नहीं देखा गया। स्तनपान में इष्टसाधनता का ज्ञान पूर्वजन्म सिद्ध करते हुए आत्मा को नित्य [अक्षणिक] सिद्ध कर देता है ॥ ६ ॥

शरीरेण सह जायते म्रियते चेति पामरभ्रान्तिनिरासायाह—इष्टेति। स आत्मा नित्यः। कुतः? सद्योभुवः शिशोः स्तन्ये यो रागः स इष्टसाधनताधिया भवेत्। न हीष्टसाधनत्वमस्मिञ्जन्मन्यनुभूतमिति पूर्वजन्मसिद्धिः। न हि कश्चिद् बालो रागशून्य एव जातो दृष्टः ॥ ६ ॥

**नित्यो विभुरद्वैतो ध्येयो जगदवनजननलयहेतुः ।**
**सर्वज्ञः परमात्मा ज्ञेयः शरणागतत्राणः ॥ ७ ॥**

जगत् का रक्षण, पालन व लय करने वाला नित्य, व्यापक, अद्वितीय परमात्मा ध्येय है। शरणागतरक्षक सर्वज्ञ परमात्मा ध्येय होने से ज्ञेय भी है ॥ ७ ॥

जीवत्मा परमात्मा चेत्यात्मद्वैविध्यम्। तत्र परमात्मापि ज्ञेय एव। यतो ध्येयः। ध्येयत्वमपि शरणागतरक्षकत्वात्। स च तत्समर्थः। कुतः? सर्वज्ञो जगदुत्पत्तिस्थितिलयकर्ता चेति। कथं देशविशेषवर्ती सर्वरक्षकः? तत्राह—विभुरिति। अपर एव ध्यायतां, नेत्याह—अद्वैत इति। रक्षकत्वादिना द्वितीयेश्वररहितः। न वा कालान्तरेऽप्यपरः। नित्यत्वात् ॥ ७ ॥

चेष्टेन्द्रियार्थाश्रयः शरीरम् ( १.१.११ )

**सुखदुःखाधिष्ठानं चेष्टेन्द्रिययोग्यदृष्टसंभूतम् ।**
**पार्थिवमिदं शरीरं गन्धयुगाप्यादि वरुणादेः ।। ८ ।।**

सुख-दुःख का अधिष्ठान, चेष्टा व इन्द्रियों का आश्रय, अदृष्टनिमित्त से जन्मा हम लोगों का शरीर गंधयुक्त होने से पार्थिव हैं। वारुणादि लोकों में जलीयादि शरीर भी होते हैं ।। ८ ।।

शरीरं निरूपयति–सुखेति। इष्टानिष्टप्राप्तिपरिहारानुकूलव्यापारश्चेष्टा। अर्थौ सुखदुःखे। चेष्टाद्याश्रयभूतमिदमस्मदादीनां पार्थिवं, गन्धयुक्तत्वात्। जलादीनामत्र सहकारितामात्रम्। आप्यादिशरीरं वारुणादिलोकीयानाम् ।।

**वर्णाश्रमभानयुतं पितृपुत्रादिस्वरूपमस्य पुनः ।**
**आत्मन्यध्यासात्स्यान्मिथ्याज्ञानं भवनिदानम् ।। ९ ।।**

यह शरीर ब्राह्मणत्वादि धर्मों से व पितृत्वादि से युक्त है। शरीर व आत्मा के तादात्म्याध्यास से 'मैं जन्मादिवाला हूं' आदि संसारकारण मिथ्याज्ञान होता है ।। ९ ।।

ब्राह्मण्यादिधर्मयुतं पितृत्वपुत्रत्वादियुक्तं शरीरम्। अस्य तादात्म्यपुरस्कारेण चात्मन्यध्यासाद् भवकारणं मिथ्याज्ञानम्-अनित्योऽहं जन्ममरणवानित्यादिरूपं भवति ।। ९ ।।

घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ( १.१.१२ )

**स्युर्घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ।**
**प्रत्यक्षकरणमिन्द्रियममनः किं वा मनोऽप्यस्तु ।। १० ।।**

घ्राण, रसना, चक्षु, त्वक् व श्रोत्र—ये पाँच भौतिक इन्द्रियाँ हैं। मन से भिन्न रहते हुए जो प्रत्यक्ष का कारण हो, उसे इन्द्रिय कहते हैं। या मन भी इन्द्रिय माना जा सकता है ।। १० ।।

इन्द्रियाण्याह—स्युरिति। घ्राणादीनि पञ्च भौतिकानि। तल्लक्षणं प्रत्यक्षकरणत्वमेव। भूतेभ्य इति सूत्रोक्तेर्मनोभिन्नत्वं विशेषणं देयम्। मनसः पृथग्वक्तव्यत्वात्। किं वा मनोऽपीन्द्रियं भवतु। भौतिकेन्द्रियाणां लक्ष्यत्वान्मुनिना भूतेभ्य इत्युक्तम् ।। १० ।।

**बधिरोऽस्म्यन्धोऽस्म्यहमिति तद्धर्माध्यास आत्मनि स्पष्टः ।**
**संसारकारणत्वात्तान्यपि सम्यक् प्रमेयाणि ।। ११ ।।**

'मैं बहरा हूँ, मैं अन्धा हूँ,' आदि अनुभवों में इन्द्रिय-धर्मों का आत्मा में अध्यास स्पष्ट प्रतीत होता है । बन्धकारण होने से इन्द्रियों को भी ठीक तरह समझ लेना चाहिए ।। ११ ।।

अत्राप्यध्यासं बन्धकारणमाह प्रमातव्यत्वार्थं—बधिर इति । न चावच्छेद्यतया बाधिर्यादिवैशिष्ट्यमर्थ इति वाच्यम् । साक्षादेव प्रतीतेः । न हि घटाद्यवच्छेदेन सुखाद्यभावदर्शनाद्, घटवानात्मेति प्रतीतिर्भवति । भवति च बधिरोऽहं, बधिरत्ववानहमिति । तस्मादध्यास एव ।। ११ ।।

**यत्प्राप्यकारितैषां व्यापकतार्कादिदर्शनात्तेन ।**
**आत्मैव तानि नैवं व्यवधानेऽपीक्षणापत्तेः ।। १२ ।।**

शंका—जो प्राप्यकारी होते हैं वे व्यापक होते हैं; इन्द्रियाँ प्राप्यकारी हैं क्योंकि उनसे सूर्यादि का दर्शन होता है, अतः व्यापक हैं व अत एव आत्मा है ? समाधान—नहीं, यदि इंन्द्रियाँ व्यापक व आत्म हों तो व्यवधान होने पर भी सूर्यादि का दर्शन होना चाहिये ।। १२ ।।

नन्विन्द्रियाणां प्राप्यकारित्वात् सूर्यादिदर्शनार्थं तेषां व्यापकत्वं वक्तव्यम् । तथा चेन्द्रियाण्यात्मैव । न च नानात्मप्रसङ्गः । एकस्यैवात्मनो गोलकविशेषे ज्ञानविशेषोपपत्तेः । गोलकोपघातप्रयुक्तज्ञानाऽसामर्थ्यमेवान्धोऽस्मीत्यादेरर्थं इति नाध्यास इति चेन्न । इन्द्रियाणां व्यापकत्वे आत्मस्वरूपे च व्यवधानेऽपि सूर्यादिर्शनं स्यात् । सर्वत्रात्मसत्त्वात् । न च तत्र गोलकविरहान्न दर्शनमिति वाच्यम् । तर्हि सूर्यदेशे गोलकविरहात् कदापि सूर्यदर्शनं न स्यात् । सूर्यच्छायाग्राही गोलकश्चेद् व्यर्थ एवेन्द्रियव्यापकत्वस्वीकारः ।।

**तस्मात् क्षित्यादिभवाः स्वस्वगुणव्यञ्जकाश्च नासाद्याः ।**
**न व्यापका न नित्या नैव तथात्मस्वरूपाश्च ।। १३ ।।**

इसलिये पृथिवो आदि से उत्पन्न नासिका आदि इन्द्रियाँ अपने अपने गुणों की अभिव्यञ्जिका हैं । वे न व्यापक हैं, न नित्य हैं, न ही आत्मस्वरूप हैं ।।१३।।

घ्राणेन्द्रियं पार्थिवं स्पर्शाद्यव्यञ्जकत्वे सति गन्धव्यञ्जकत्वाद् । वायूपनीतसुरभित्रसरेण्वादिवत् । रसना जलीया रसमात्रव्यञ्जकत्वाद् जिह्वान्तः-

स्थजलकणवत्। न हि जिह्वाशोषे रसानुभूतिः। चक्षुस्तैजसं रूपमात्राभिव्यञ्जकत्वात् प्रभावत्। त्वग् वायुजन्या केवलस्पर्शाभिव्यञ्जकत्वाद् वायुवदेव। श्रोत्रमाकाशं शब्दाभिव्यञ्जकत्वादित्यनुमानैर्घ्राणादीनां क्षित्यादिभवत्वमव्यापकत्वं श्रोत्रेतरस्यानित्यत्वं सर्वेषामनात्मस्वरूपत्वं च सिद्धम्।

गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः (१.१.१४)

**अर्था गन्धरसाद्या इन्द्रियविषया निरूपिताः पञ्च।**
**येषामुपभोगभवा रागद्वेषादयो दोषाः॥ १४॥**

गन्ध-रस आदि पाँच इन्द्रियविषय हैं। इन विषयों के उपभोग से रागद्वेष आदि दोष उत्पन्न होते हैं॥ १४॥

अर्थान्निरूपयति-अर्था इति। विषिण्वन्ति बध्नन्त्यात्मानं रागादिभिरिति विषयाः। तदेवाह—येषामिति॥ १४॥

**भूतानामुपभोगो रूपस्पर्शाश्रयत्वतो भवति।**
**तस्मात्साक्षाद्भोग्यं रूपादिकमेव मन्यन्ते॥ १५॥**

भूतों का उपभोग रूपादि के आश्रय होने से होता है; अतः रूपादि ही साक्षात् भोग्य माने जाते हैं॥ १५॥

क्वचिद् द्रव्योपभोगोऽपि रूपस्पर्शवत्त्वेनेति साक्षादर्थो रूपादिरेव। अत एवार्थत्वमनुक्त्वैव पृथिव्यादिभूतानां नमोद्देशमात्रं मध्ये सूत्रकृता कृतम्॥

बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्। (१.१.१५)

**बुद्धिर्ज्ञानं सा च स्मृत्यनुभवभेदतो द्विधा प्रोक्ता।**
**किं च भ्रमप्रमाभ्यां प्रागेव निरूपिता द्विविधा॥ १६॥**

बुद्धि कहते हैं ज्ञान को। वह दो प्रकार की है—(१) स्मृति तथा (२) अनुभव। भ्रम और प्रमा भेद से भी वह दो प्रकार की बतायी गयी हैं॥ १६॥

बुद्धिं क्रमप्राप्तां निरूपयति-बुद्धिरिति। बुद्धिर्नाम ज्ञानमेव। न तु मनोवद् द्रव्यविशेषः। सा स्मृत्यनुभवभेदेन द्विधा प्रागेव प्रोक्ता वैशेषिकनिरूपणावसरे। तथा भ्रमप्रमाभेदेन द्वैविध्यं प्रमाणनिरूपणावसरे निरूपितम्॥ १६॥

**द्विविधा पुनश्च सोक्ता सविकल्पकनिर्विकल्पकप्रभिदा ।**
**आद्या तु सप्रकारा स्यादन्या निष्प्रकारा च ।। १७ ।।**

किं च बुद्धि के और भी दो भेद हैं—(१) सविकल्पक, (२) निर्विकल्पक। सविकल्पक सप्रकार होती है और निर्विकल्पक निष्प्रकार होती है ।। १७ ।।

सविकल्पकनिर्पिकल्पकभेदेन पुनर्द्विधा। सप्रकारा सविकल्पा, निष्प्रप्रकारा तु निर्विकल्पा तदप्युक्तं पुरा ।। १७ ।।

**घट इति विषयाध्यक्षं व्यवसायोऽहं घटं मिनोमीति ।**
**ज्ञानमनुव्यवसायो ज्ञानाध्यक्षस्वरूपं यत् ।। १८ ।।**

'यह घट है'—ऐसा विषयप्रत्यक्ष व्यवसायात्मक ज्ञान है। 'घटको मैं जानता हुँ' ऐसा ज्ञानप्रत्यक्ष अनुव्यवसायात्मक ज्ञान हैं ।। १८ ।।

पुर्वाद्विविधम्। व्यवसायोऽनुव्यवसायश्च। अयं घट इति विषयज्ञानं व्यवसायः। घटमहं जानामीति ज्ञानप्रत्यक्षमनुव्यवसाय इत्युच्यते ।। १८ ।।

**अव्यपदेश्यमतीन्द्रियमव्यपदेश्यं ह्यतीन्द्रियस्य न च ।**
**इतरापोहाज्जातेरतीन्द्रियाया भवेज्ज्ञानम् ।। १९ ।।**

निर्विकल्पकज्ञान अतीन्द्रिय होता है। उसका अनुव्यवसाय नहीं होता। अतीन्द्रिय[जाति] का भी निर्विकल्पक ज्ञान नहीं होता। अतीन्द्रिय जाति का ज्ञान अन्य की व्यावृत्ति करते हुए होता है ।। १९ ।।

निर्विकल्पकज्ञानमतीन्द्रियं भवति। तस्यानुव्यवसायो नास्तीति यावत्। न हि घटत्वादेः स्वरूपतो ज्ञानादौ विषयितया भानं संभवति। तथा सति घटो ज्ञानमिति प्रत्ययापत्तेः। किं च अतीन्द्रियजातेरव्यपदेश्यं निर्विकल्पकज्ञानं न भवति। ननु विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वाद् मन इति ज्ञानं कथ स्यात्? मनस्त्वजातेरतीन्द्रियाया निर्विकल्पकासंभवात्। न च मन इत्याकारकसविकल्पकघटकमनस्त्वज्ञानात् स्यादिति वाच्यम्। तस्या अपि विशिष्टबुद्धित्वाद्विशेषणज्ञानापेक्षायामनवस्थापत्तेः। न चानादिसंसारे ज्ञानानवस्थानं प्रामाणिकमित्यदोषावहमिति वाच्यम्। एवं सति घटत्वादिनिर्विकल्पकं विनैव घटत्वादिविशिष्टबुद्धेरपि तथैव संभवेन निर्विकल्पकोच्छेदापत्तेः। यत्तु जातित्वेन मनस्त्वज्ञाने सति पश्चाज्जातित्वप्रमोषात्स्वरूपतो मनस्त्वप्रकारकबोधोपपत्तिरिति। तदसत्। प्रमेयत्वेन

घटत्वपटत्वादिसकलज्ञाने प्रमेयत्वमोषेण सर्वस्य सार्वज्ञापत्तेः । अत्र वदन्ति । यथाऽवयवसंस्थानविशेषप्रत्यक्षमनेकगोषु जात्यभिव्यञ्जकम् एवं चक्षुरादि-भिन्नज्ञानकरणत्वज्ञानमनुगतमनस्त्वविशिष्टमनोज्ञानजनकम् । न चैवं मनस्त्वनिर्विकल्पकमपि भवत्विति वाच्यम् । इन्द्रियसंनिकर्षादिर्हेतोरभावात् ।१९

**सा च तृतीयक्षणगध्वंसप्रतियोगिनी भवेत्प्रायः ।**
**संख्यादिजन्महेतुस्त्रिक्षणगा स्यादपेक्षाधीः ॥ २० ॥**

बुद्धि का नाश प्रायः उत्पन्न होने के तीसरे क्षण में होता है। संख्या आदि की जननी अपेक्षाबुद्धि तीन क्षण तक रहती है ॥ २० ॥

तृतीयक्षणवृत्तिध्वंसप्रतियोगिनी द्विक्षणवर्तिनी सा बुद्धिः प्रायो भवति । प्रायस्त्वकारणं विशदयन्नाह—संख्यादीति । अयमेकोऽयमेक इत्याद्यपेक्षा-बुद्धिर्द्वित्वादिसंख्यापृथक्त्वादिजननी क्षणत्रयस्थायिनी ॥ २० ॥

**क्षणिकं नैव ज्ञानं तत्प्रत्यक्षं तदा न जायेत ।**
**प्रत्यक्षे विषयो हि स्वकालवर्तीष्यते हेतुः ॥ २१ ॥**

ज्ञान क्षणिक नहीं, अन्यथा उसका प्रत्यक्ष न होगा, क्योंकि प्रत्यक्ष-काल में प्रत्यक्ष-विषय की विद्यमानता आवश्यक है ॥ २१ ॥

द्वितीयक्षणवृत्तिध्वंसप्रतियोगिनीं केचिद् बुद्धिमाहुः । तदयुक्तम् । तत्प्रत्यक्षाभावप्रसङ्गात् । प्रत्यक्षे स्वकालवर्तिनो विषयस्यैव हेतुत्वात् ॥२१॥

**ज्ञानविशेषं विषयं केचिन्निगदन्ति तदपि नहि युक्तम् ।**
**अर्थेनैव विशेषो यस्माज्ज्ञानं निराकारम् ॥ २२ ॥**

योगाचारी बौद्ध ज्ञानविशेष को ही विषय मानते हैं। पर वह अनुचित है। क्योंकि ज्ञान स्वयं निराकार है, विषय से ही उसमें विशेषता आती है ॥ २२ ॥

योगाचारा ज्ञानविशेषरूपमर्थं वदन्ति । तन्न युक्तम् । ज्ञाने विशेषो ह्यर्थेनैव । ज्ञानस्य स्वतो निराकारत्वात् ॥ २२ ॥

**न सहोपलम्भनियमादभिदा खलु नीलतद्धियोर्युक्ता ।**
**कथमिव बाधकभावं साधक एव प्रपद्येत ॥ २३ ॥**

विषय और तद्विषयक बुद्धि क्योंकि एक साथ उपलब्ध होते हैं अतः अभिन्न हैं—यह बात गलत है। विषय की सिद्धि करने वाला ज्ञान उससे अभिन्न होकर

उसी का बाध करे, यह कल्पना अनर्गल है। 'घड़े को जान रहा हूँ अतः घड़ा नहीं है' यह अनुभव-विरुद्ध है ॥ २३ ॥

सहोपलम्भनियमादभेदो नीलतद्धियोरिति धर्मकीर्तिः। हन्त नीलमर्थं तद्बुद्धिरेव साधयतीति सैव तं निगिलतीति रक्षक एव भक्षक इति चित्रम्। न हि लोके घटमहं पश्यामि अतो घटो नास्तीति कश्चिद् ब्रूते ॥ २३ ॥

**सकलं बुद्धिविलासं जानन्मर्त्यः कथं प्रवर्तेत।**
**अर्थद्वयविज्ञाने कथमिव भेदः प्रवृत्तेः स्यात् ॥ २४ ॥**

सभी कुछ ज्ञानमात्र का ही विलास है—ऐसा जानते हुए पुरुष प्रवृत्ति-निवृत्ति नहीं कर सकता। किं च दो विषयों के एक ज्ञान के होने पर विषयानुसार प्रवृत्तिभेद उक्त मत में दुःसाध्य है ॥ २४ ॥

सकलं मदीयबुद्धिविलासरूपमिति जानन्मर्त्यो भोजनादौ न प्रवर्तेत, विषादेश्च न निवर्तेत। पुष्पकण्टकाविति विषयद्वयज्ञानस्यैकत्वात्पुष्पे प्रवृत्तिः कण्टकान्निवृत्तिश्चेति भेदो न स्यात् ॥ २४ ॥

**यदि चादृष्टं किंचिन्नियामकं स्यात्तदा तदेव स्यात्।**
**ज्ञानादतिरिक्तोऽर्थस्तस्मान्नेदं मतं सम्यक् ॥ २५ ॥**

यदि किसी अदृष्ट को उपर्युक्त प्रसंग में नियामक मानें तो वह अदृष्ट ही क्षणिक विज्ञान से पृथक् सिद्ध होकर विज्ञानवादी को डरा देगा ॥२५॥

यदि च नियतप्रवृत्तिनिवृत्त्योर्नियामकं किमप्यदृष्टं कारणं स्वीक्रियेत तदा तदेव ज्ञानादतिरिक्तमिति क्षणिकविज्ञानवादोऽयुक्तः ॥ २५ ॥

**सुखदुःखादिकमखिलं बुद्धौ सत्यां भवेद्धि विषमायां।**
**विमलामतो विदध्यात्तामत एव प्रमेया सा ॥ २६ ॥**

बुद्धि के विषम होने पर ही सुखदुःखादि होते हैं, निर्मल होने पर या निवृत्त होने पर नहीं। अतः बुद्धि को निर्मल बनाना चाहिये या निरुद्ध कर लेना चाहिये। तदर्थतया बुद्धि भी प्रमेय है ॥ २६ ॥

सुखदुःखरागद्वेषादिकं सकलमपि विषमायां बुद्धौ सत्यां भवति। न तु निर्मलायां निरुद्धायां वा। तन्नैर्मल्यं चेष्टद्विष्टाद्यविषयकत्वसंपादनेनेव। अतो बुद्धिं विमलां विदध्यान्निरुन्धीत वा। तदर्थं च तत्स्वरूपतत्साधनादिकं प्रमेयं भवति ॥ २६ ॥

युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ( १.१.१६ )

**युगपज्ज्ञानादीनां यदनुत्पत्तिस्ततो मनः सिद्धम् ।**
**तच्चैकमणु च नित्यं सुखादिसाक्षात्कृतौ करणम् ।। २७ ।।**

ज्ञानादि एक साथ उत्पन्न नहीं होते, इसी से मन सिद्ध होता है। वह प्रतिदेह एक है, नित्य व अणु है। सुखादि के साक्षात्कार में मन ही करण है।

मनो निरूपयति—युगपदिति। ज्ञानादीनां युगपदनुत्पत्तिरणोर्मनसो लिङ्गम्। प्रतिशरीरं च तद्भिन्नम्। सुखादिसाक्षात्कारे साक्षात्तदेकं करणम्।

**रूपरसादेर्भानं युगपन्ननु दीर्घशष्कुलोप्साने ।**
**नैवमलातभ्रमिवद् द्रुतगतिमत्त्वाद्भवेन्मनसः ।। २८ ।।**

प्रश्न—मालपुआ आदि खाते समय उसके रूप रस आदि का एक साथ ही भान होता है, अतः मन उक्त प्रकार से असिद्ध है ? उत्तर—ऐसा नहीं। जैसे मशाल को शीघ्र घुमाने से प्रकाशचक्र प्रतीत होता है वैसे ही रूपादि का शीघ्र क्रमशः ज्ञान होने पर भी एक साथ होने जैसा प्रतीत हो जाता है ।। २८ ।।

ननु दीर्घशष्कुलीभक्षणादौ तदीयरूपरसगन्धस्पर्शादिर्युगपदनुभवो भवतीति चेन्न। अलातभ्रमिवन्मनसो द्रुतगतिमत्त्वाद्यौगपद्यभ्रम एव, न तु वस्तुतो ज्ञानयौगपद्यम् ।। २८ ।।

**चञ्चलमतिवेलं तत् प्रमथनशीलं दृढं च बलवच्च ।**
**बहुविधसंकल्पोऽतो रागद्वेषादयोऽप्येव ।। २९ ।।**

वह मन अत्यन्त चंचल, जिद्दी और बली है, अतः शरीरादि को मथ देता है। क्योंकि मन ऐसा है इसलिये नाना संकल्प, राग, द्वेष आदि होतें हैं ।। २९ ।।

तन्मनोऽतिमात्रं चञ्चलं, प्रमथ्नाति कायादिकं, दृढं च बलवच्च। अतो बहुविधसंकल्पा जायन्ते रागद्वेषादयोऽपि ।। २९ ।।

**तद्गतिनिरोधमेव च वृत्तिनिरोधं जगुर्बुधा योगम् ।**
**तत्प्रतिषेधार्थं मुहुरभ्यासश्चैकतत्त्वस्य ।। ३० ।।**

जिस योग को विद्वान् वृत्तिनिरोध कहते हैं, वह मन की गति का ही निरोध है। मनोनिरोधार्थ यह अभ्यास बार-बार करना चाहिये कि वह केवल आत्मा से ही संयोग बनाये रखे ।। ३० ।।

योगश्चित्तवृत्तिनिरोध इति चित्तस्य वृत्तिर्वर्तनं गतिर्या तन्निरोध एव योग इत्युक्तो बुधैः। तत्प्रतिषेधार्थमेकतत्त्वाभ्यास एकतत्त्वमात्रगतिरेकात्मतत्त्वसंयोगसंपादनं कार्यम् ॥ ३० ॥

**तत्र प्रणिधानादिः संस्कारोद्बोधकोऽपि विज्ञेयः।**
**यत्नान्निवर्तकाच्च स्थैर्यं तस्मात्प्रमेयमिदम् ॥ ३१ ॥**

उक्त अभ्यास में संस्कारोद्बोधक प्रणिधानादि भी जानने चाहिये। निवर्तक-प्रयत्न से मन स्थित होता है। उसे स्थिर करना इष्ट होने से वह प्रमेय है।

प्रणिधाननिबन्धाभ्यासेत्यादिसूत्रोक्तानामेकतत्त्वे प्रयुक्तानां स्मृत्युद्बोधकानामप्यत्रोपयोगः। आत्मगतयत्नाद्यथा शरीरादेः प्रवृत्तिनिवृत्ती तथा मनसोऽपीति निवर्तकप्रयत्नान्मनोनिरोधे सति समाधिरिति मनः प्रमेयमेव।

**प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः (१.१.१७)**

**वाग्बुद्धिशरीराणामारम्भस्तु प्रवृत्तिरित्युक्तः।**
**तत्र शुभा धर्मायाधर्माय पुनर्भवेदशुभा ॥ ३२ ॥**

वाणी, मन और शरीर द्वारा जो किया जाता है उसे प्रवृत्ति कहते हैं। वह शुभ-अशुभ भेद से द्विविध है। शुभ प्रवृत्ति से धर्म और अशुभ प्रवृत्ति से अधर्म होता है ॥ ३२ ॥

प्रवृत्तिं लक्षयति-वागिति। बुद्धिपदं मनःपरम्। जन्मदुःखादिमूलशुभाशुभप्रवृत्ती विज्ञायाशुभात्सर्वथा निवृत्तिः शुभायां च यावदुपकारं प्रवृत्तिराश्रयणीयेत्याह—तत्रेति ॥ ३२ ॥

**हिंसा स्तेयमगम्यागमनमिति भवेच्छरीरतस्त्वशुभा।**
**दानं च परित्राणं परिचरणं चेति भवति शुभा ॥ ३३ ॥**

हिंसा, चोरी, जारी आदि अशुभ प्रवृत्तियाँ शरीर से होती हैं। दान, रक्षा, सेवा, आदि शरीर से होने वाली शुभ प्रवृत्तियाँ हैं ॥ ३३ ॥

शरीरप्रवृत्तिमाह—हिंसेति। अहिंसाऽस्तेयब्रह्मचर्याणां यमानां संपादनार्थं हिंसादिकं ज्ञात्वा त्याज्यम्। दानमपरिग्रहोपोद्बलनार्थं, नियमान्तर्गततपःसिद्ध्यर्थं परित्राणादि। इतिशब्दः प्रकारार्थः ॥ ३३ ॥

**अनृतं परुषं सूचनमननुगतं वाचिकी भवेदशुभा ।**
**सत्यं हितं प्रियं च स्वाध्यायश्चापि भवति शुभा ।। ३४ ।।**

झूठ व कठोर बोलना, चुगली करना, असम्बद्ध बोलना आदि वाणी की अशुभ प्रवृत्तियाँ हैं । सच, हितकर व प्रिय बोलना, वेदपाठ करना आदि उसकी शुभ प्रवृत्तियाँ हैं ।। ३४ ।।

वाचिकप्रवृत्तिमाह-अनृतमिति । यमान्तर्गतसत्यसंपादनायानृतसत्यहित-प्रियाणि ज्ञेयानि । अननुगतमसम्बद्धम् । तत्सत्यरक्षणाय त्याज्यम् । परुषसूचने हितरक्षार्थम् । स्वाध्यायो नियमान्तर्गतः । ॐकारादिमन्त्रजपो मोक्षशास्त्राध्ययनं वा ।। ३४ ।।

**मनसा तु परद्रोहः परधनलोभश्च नास्तिकत्वं च ।**
**स्यादशुभाऽथ शुभा स्याद् दयाऽस्पृहा निर्मला श्रद्धा ।। ३५ ।।**

परद्रोह, परकीय धन की स्पृहा, नास्तिकता आदि मन की अशुभ तथा दया, निर्लोभ, श्रद्धा आदि उसकी शुभ प्रवृत्तियाँ हैं ।। ३५ ।।

मनःप्रसादः सौम्यत्वमित्यादि मानसतपोनिर्वृत्त्यर्थं परद्रोहादिपरित्यागः कार्यः । संतोषार्थं परधनलोभत्यागः । ईश्वरप्रणिधानार्थं नास्तिकत्वत्यागः । एवं दयादीनामपि यथायथं यमनियमसंपादनौपयिकत्वं द्रष्टव्यम् ।। ३५ ।।

**कर्मापेक्षैर्भूतैः शरीरसर्गस्ततः पुनः कर्म ।**
**एवं प्रवर्तते किल सकलं संसारचक्रमिदम् ।। ३६ ।।**

कर्मसापेक्ष महाभूतों से संसारबन्धरूप शरीरोत्पत्ति होती है व शरीर से पुनः कर्म होता है; इस प्रकार सम्पूर्ण संसार चक्र अनवरत चलता रहता है ।। ३६ ।।

एवं त्रिविधप्रवृत्तिजनितपुण्यापुण्यलक्षणकर्मसापेक्षैः पृथिव्यादिभूतैः शरीरसर्गः संसारबन्धनाख्यो भवति । ततः पुनः कर्मेति रीत्या सकलं संसारचक्रमिदं प्रवर्तते । अतो मोक्षेच्छुभिः प्रवृत्तिं सम्यग्विज्ञाय प्रथमं पापनिवृत्तिपूर्वकपुण्यप्रवृत्तिः पश्चात्पुण्यप्रवृत्तेरपि परित्यागेन नैष्कर्म्ये स्थितिरादर्तव्येत्यभिप्रायः ।। ३६ ।।

**प्रवर्तनालक्षणा दोषाः ( १.१.१८ )**

**रागो द्वेषो मोहो दोषा एते प्रवर्तनारूपाः ।**
**रागसपक्षा मत्सरतृष्णालोभस्पृहाकामाः ।। ३७ ।।**

**मानप्रमादसंशयमिथ्याज्ञानानि मोहपक्षाणि ।**
**क्रोधामर्षासूयाद्वेषेर्ष्या द्वेषपक्षीयाः ॥ ३८ ॥**

राग, द्वेष व मोह—ये प्रवर्तनारूप दोष हैं। मत्सर, तृष्णा, लोभ, स्पृहा व काम—ये रागकोटि के हैं। मान, प्रमाद, संशय व मिथ्याज्ञान—ये मोहकोटिके हैं। क्रोध, अमर्ष, असूया द्वेष व ईर्ष्या—ये द्वेषकोटि के दोष हैं।

दोषानाह—राग इति। एतेषां संसारहेतुत्वं स्पष्टं प्रमाय ते हातव्या भवन्ति। अत्र मोहपक्षीयमिथ्याज्ञानपदेन मिथ्याज्ञानप्रयोज्यद्विष्टेष्टसाधनत्वज्ञानमेव ग्राह्यम्। तेन दोषात् पृथक्त्वेन मिथ्याज्ञानस्योपपादानं सूत्रकृतः संगच्छते। परे त्वभिनिवेशमेव मोहं मन्यन्ते। पातञ्जले तद्दर्शनात् ॥ ३८ ॥

**मोहो यस्य न विगतो रागद्वेषौ दृढं विजृम्भेते ।**
**तस्य प्रवृत्तितः स्याज्जन्मेत्येते विवेक्तव्याः ॥ ३९ ॥**

जिसके मोह, राग और द्वेष निवृत्त नहीं हुए उसी का शुभाशुभ प्रवृत्ति द्वारा जन्म होता है, इनसे रहित शारीरमात्र चेष्टा से नहीं। ये नष्ट किये जा सकें इसके लिये इन्हें जानना आवश्यक है ॥३९॥

यस्य मोहो न नष्टोऽत एव रागद्वेषौ विजृम्भेते तस्य शुभाशुभप्रवृत्तिर्भवति तस्यैव ततो धर्माधर्मौ च। शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषमिति भगवद्वचनात्। तस्यैव जन्मसंसारोऽपीति रागद्वेषमोहाः प्रमातव्याः।

**पुनरुत्पत्तिः प्रेत्यभावः। ( १.१.१९ )**

**पूर्वशरीरं हित्वोपादत्ते यत्कलेवरं ह्यपरम् ।**
**स प्रेत्यभाव उक्तस्तदिदं प्राहुः पुनर्जन्म ॥ ४० ॥**

पूर्व शरीर छोड़ नवीन देह धारण करना प्रेत्यभाव या पुनर्जन्म कहलाता है।

प्रेत्यभावं व्याचष्टे—पूर्वेति। मरणमेव मोक्ष इति मत्वा मा भूच्छास्त्राभ्यासादावप्रवृत्तिरित्यनाद्यनन्तजन्ममरणपरम्पराप्रबोधनमावश्यकमिति प्रेत्येति विशेषणम् ॥ ४० ॥

**यदि नैव नित्य आत्मा न खलु तदा प्रेत्यभाव एवापि ।**
**कृतहान्यकृताभ्यागमदोषौ स्यातामनियमश्च ॥४१॥**

यदि आत्मा नित्य न हो तो प्रेत्यभाव भी नहीं होगा तथा कृतहानि व अकृताभ्यागम दोष होंगे। संसार में वैपम्य के प्रति अदृष्टादि कोई कारण न होने से सर्वत्र अनियम की भी आपत्ति होगी ॥ ४१ ॥

अधिकरणसिद्धान्तन्यायेनात्मनो नित्यत्वमप्युपगन्तव्यम्। तस्मिन् सत्येव पूर्वशरीरत्यागशरीरान्तरग्रहणे स्याताम्। अन्यथा प्रेत्यभावाभावे कृतहान्यकृतत्भ्यागमौ दोषौ भवेताम्। संसारस्याकस्मिकत्वेन सर्वत्रानियमश्च प्रसज्येत ॥ ४१ ॥

प्रवृत्तिदोषजनितोऽर्थः फलम् ( १.१.२० )

**सुखदुखवेदनं स्यात्फलमेतच्च प्रवृत्तिदोषोत्थम्।**
**तद्धेतवश्च कायेन्द्रियविषयधियश्च फलमुक्ताः ॥ ४२ ॥**

सुख व दुःख का ज्ञान होना फल है जो प्रवृत्तिरूप दोष से पैदा होता है। सुखादि के हेतु शरीर, इन्द्रिय विषय व बुद्धि को भी फल कह दिया जाता है ॥४२

फलं निरूपयति-सुखेति। सुखदुःखसंवेदनं मुख्यं फलम्। तच्च प्रवृत्तिभिर्दोषैश्च न्याख्यातैरुद्भवति सुखादिहेतवः शरीरेन्द्रियविषयबुद्धयश्च फलमुक्ताः ॥ ४२ ॥

**बीजोपमर्दने स्यादङ्कुरफलमित्यभावतो भावः।**
**मेवं तदवयवानां कारणता ह्यन्यसहकारात् ॥ ४३ ॥**

शंका—बीज नष्ट होने पर अंकुरोत्पत्ति दीखने से अभाव से भाव का जन्म स्वीकारना चाहिये, न कि प्रवृत्ति से? समाधान—अंकुर का कारण बीजनाश नहीं, अपितु मिट्टी आदि से सहकृत बीज के अवयव ही कारण हैं ॥ ४३ ॥

नन्वभावात् भावोत्पत्तिरिति प्रवृत्तिदोषशरीरेन्द्रियादीनामकारणत्वादफलत्वमित्याशङ्कते—बीजेति। बीजध्वंसोत्तरं ह्यङ्कुरोत्पत्तिर्दृश्यत इति नाभावस्यैव कारणत्वम्। बीजध्वंसस्यैव हेतुत्वे बीजदाहेऽप्यङ्कुरोत्पत्तिः स्यात्। अतो बीजावयवेभ्य एवाङ्कुरोत्पत्तिः। न च मृज्जलसंयोगप्रयुक्तबीजध्वंसादेवाङ्कुरोत्पत्तिर्न तु दाहजन्यबीजध्वंसादिति वाच्यम्। असतो ध्वंसस्यानुपाख्यस्य विशेषायोगात्। न च बीजस्याऽध्वंसेऽपि नाङ्कुरोत्पत्तिरिति ध्वंसस्यापि हेतुत्वं वक्तव्यम्। प्रलये सर्वध्वंसाद् ध्वंसमात्रं कारणमिति वाच्यम्। तथापि परमाणूनां सत्त्वादावश्यकत्वाच्च। अन्यथाऽभावस्य सर्वत्र सुलभत्वात्सर्वं सर्वत्र स्यात् ॥ ४३ ॥

**नेश्वर एकः फलदो वैषम्यादेस्ततः स सापेक्षः ।**
**भक्तियुजां परमेशस्त्वनुगृह्णीयात् पुरुषकारम् ।। ४४ ।।**

ईश्वर स्वयं ही कर्मनिरपेक्ष हो फलदाता नहीं, अन्यथा उसमें वैषम्य-नैर्घृण्य-दोष प्रसक्त होंगे। अतः वह कर्म-सापेक्ष हो फलदाता है। भक्तों के पुरुषकार को परमेश्वर अनुगृहीत करता है ॥ ४४ ॥

नन्वीश्वर एव फलं प्रयच्छतीति प्रवृत्तिदोषजन्यत्वमयुक्तम्। शरीरादिकमपि परमेश्वर एव ददातीति चेन्न। सुखिनो दुःखिनश्च सृजतो भगवतो वैषम्यापत्तेः। तथा दुःखिनः सृजतो नैर्घृण्यापपत्तेः। अतः कर्मसापेक्ष एवेश्वरः सुखादिशरीरादिफलदः। ननु विनापि कर्म कथं भजतां फलं प्रयच्छतीश्वर इति चेन्न। भजनस्यापि कर्मत्वात्। तेषामपि पृथक् पुरुषकारसत्त्वाच्च ॥ ४४ ॥

**सर्वमनित्यं कस्य हि किं फलमिति चेदनित्यता कीदृक् ।**
**तस्माद्यथाप्रमाणं नित्यमनित्यं विवेक्तव्यम् ।। ४५ ।।**

यदि कहो कि सब अनित्य है जिससे कि किसी को कोई फल मिलेगा नहीं, अतः प्रवृत्ति व्यर्थ है; तो हम पूछेंगे कि अनित्यता नित्य है या अनित्य ? उभयथा दोष होगा। अतः प्रमाणसिद्ध नित्यानित्य विभाग ही श्रद्धेय है ॥ ४५ ॥

ननु नित्ये कस्मिंश्चिद्विद्यमाने तत्र भवदुक्तं सुखादिसंवेदनं शरीरादिकं च फलं भवेत्। सर्वमेवानित्यं चेत् कस्य किं फलम्। सदपि स्वयमेव ध्वंसेत फलभुगिति व्यर्थो यत्नः प्रमेयत्वं च न फलस्येत्याशङ्कते—सर्वमिति। अनित्यता कीदृगिति। साऽनित्यता नित्या न वा। यदि नित्या तदा सर्वमनित्यमितिप्रतिज्ञाभङ्गादात्मापि नित्यो भवितुमर्हति! यद्यनित्या, तदाऽनित्यताया नाशे नित्यत्वं पर्यवस्यति। तथा च सैव वार्ता। तस्माद् यत्प्रमाणेन नित्यं सिध्यति। तन्नित्यम्। यदनित्यं सिद्ध्यति तदनित्यमित्येव निर्णयः कार्यः। एवं सति चात्मनो नित्यताया प्रमाणसिद्धत्वात्तस्य सुखादिसंवेदनं कर्मफलम् ॥ ४५ ॥

**एतेन नित्यमखिलं कस्यचन भवेत्कदाप्यभिव्यक्तिः ।**
**इत्यपि मतं निरस्तं यथानुभूति प्रमेयत्वात् ।। ४६ ।।**

इसी युक्ति से यह मत भी निरस्त हो जाता है कि सभी नित्य है, अभिव्यक्ति कदाचित् हुआ करती है। अतः अनुभवानुसारी नित्यानित्य व्यवस्था माननी चाहिये।

एतेन सर्वक्षणभङ्गवादिबौद्धमतभङ्गेन सर्वनित्यत्ववादी सांख्योऽपि प्रत्युक्तः। स हि सर्वस्य घटपटादेः सुखादेश्च नित्यत्वमिच्छति। अभिव्यक्तिमात्रमुत्पत्तिरित्याह। तत्राभिव्यक्तिर्नित्या न वा। यदि नित्या तदा व्यापारवैयर्थ्यम्। यद्यनित्या तदा तद्वदेव घटशरीरादयोऽप्यनित्या भवन्तु। तत्राभिव्यक्तेरभिव्यक्त्यन्तरस्वीकारेऽनवस्था। ननूत्पत्तिर्नित्या न वा। यदि नित्या, घटो नित्यः स्यात्। यद्यनित्या, उत्पत्तेरुत्पत्त्यन्तरमित्यनवस्थेति चेन्न। उत्पत्तेरुत्पत्तिः प्रथमोत्पत्तिरूपैव। तथा चासतः सद्भावाद् व्यापारसार्थक्यम्। भवन्मते त्वभिव्यक्तेरभिव्यक्तिर्यदि प्रथमाभिव्यक्तिरूपा तदापि सा नित्या न वेति नोत्तरितम्। तस्माद् यथानुभूति हि सर्वं प्रमातव्यम्। सूर्योऽभिव्यज्यते पूर्वसत्त्वनिश्चयात्। घट उत्पद्यते। पूर्वमसत्त्वनिश्चयादिति।

**ननु सकलं शून्यमिदं परस्परापेक्षसिद्धिकं मैवम्।**
**वस्तुनि सति सापेक्षा ननु पितृपुत्रादिधीर्भवति ॥ ४७ ॥**

शंका - परस्पर सापेक्ष सिद्धिवाले होने से सभी शून्य हैं ? समाधान—ऐसा नहीं, क्योंकि सापेक्ष बुद्धि तभी होती है जब कोई वस्तु हो; सर्वथा असत् में सापेक्ष बुद्धि दृष्टचर नहीं ॥ ४७ ॥

ननु पितृत्वापेक्षं पुत्रत्वं पुत्रत्वापेक्षं पितृत्वमितिरीत्या सकलं जगत्परस्परापेक्षसिद्धिकत्वेनोभयासिद्धेः शून्यमिति चेन्न। वस्तुनि पिण्डद्वये सति तत्र पितृत्वपुत्रत्वह्रस्वत्वदीर्घत्वादिकं परस्परापेक्षं भवति। तत्र युगपदेवोभयसमुत्पत्तेर्नान्योन्याश्रयतापीति न शून्यताप्रसक्तिः ॥ ४७ ॥

**नासन्न सन्न सदसद्वैधर्म्यात्तेन कस्य किं कार्यम्।**
**मैवं तद्धर्मिजनिस्तद्धर्मेणास्तु संसर्गात् ॥ ४८ ॥**

शंका—कार्य सत् या असत् हो तो भी उत्पाद्य नहीं व सदसद्रूप हो नहीं सकता क्योंकि वे विरुद्ध धर्म हैं; अतः कार्यकारण अनिरूपणीय है। समाधान—ऐसा नहीं, धर्मिविशेष का जन्म धर्मविशेष के सम्बन्ध से उपपन्न हो जाता है॥४८॥

ननु कार्यं यदि सत्तदा नोत्पाद्यम्। यद्यसत्तदा कारणसम्बन्धविरहात्कार्यानियमः। ननु सदसद्रूपं, तत्र सद्रूपांशशम्बन्धादसद्रूपस्य सद्रूपतापत्तिरूपोत्पत्तिः असद्रूपतासत्त्वाद् व्यापारसार्थक्यमिति चेत्। विरुद्धधर्मत्वादयुक्तमेतत्। तस्मादनिर्वचनीयं मिथ्येति चेन्न। दण्डादेर्घटत्वादिना सह सम्बन्धसत्त्वात्तदाश्रयजन्मोपपत्तेः। न च घटत्ववत्त्वेन सकलघटोत्पादापत्तिः।

सकलघटाऽप्रयोजकत्वादेकघटोत्पत्त्या चरितार्थत्वात्। तत्तद्भविष्यद्घट-प्रागभावादीनां प्रतिबन्धकत्वाच्च। न च भविष्यतोऽसत्त्वादसतश्च विशेषकत्वानुपपत्तिरिति वाच्यम्। तत्तत्प्रागभावत्वेन प्रतिबन्धकत्वादिति दिक्।

**तस्मात्पुत्रपशुस्त्रीपरिच्छदान्नायुरादि सकलं सत्।**
**फलमिह बोध्यं दुखोदर्कं त्याज्यं प्रमेयमतः ॥ ४९ ॥**

अतः पुत्र, पशु, स्त्री, सामग्री, अन्न आदि सत्, जन्य व फलरूप हैं। इनका पर्यवसान दुःख में ही होता है, अतः त्याज्य होने से इन्हें समझ लेना चाहिये।

इत्थं च पुत्रपश्वादिकं सर्वं सच्च जन्यं चेति फलमेव। तच्च दुःखोदर्कमिति त्याज्यत्वात् प्रमातव्यं मुमुक्षुभिर्जन्यत्वेनानित्यत्वाच्चेति ॥ ४९ ॥

बाधनालक्षणं दुःखम्। ( १.१.२१ )

**प्रतिकूलवेदनीयं दुःखं यद्यप्यदः फलं प्रोक्तम्।**
**सुखमपि च दुखविधया भाव्यमिति तथा प्रमेयमिदम् ॥५०॥**

प्रतिकूल वेदनीय को दुःख कहते हैं। यद्यपि फल-विभाजन के अन्तर्गत दुःख भी आता है तथापि पृथग् वचन से पता चलता है कि सुख को भी दुखरूप ही समझना चाहिये, यह मुनि को अभिप्रेत है।

दुखं निरूपयति—प्रतिकूलेति। यद्यपि फलान्तर्गततया दुःखमप्यायातीति पुनर्दुःखस्य प्रमेयत्वोक्तिरफलेव। न च सुखदुःखसंवेदनमेव फलं भाष्यकारेणोक्तमिति वाच्यम्। असंवेद्यसुखाद्यभावेन सुखादेरपि फलत्वोपपत्तेः। तथापि पूर्वं सुखं दुखं च पृथक्कृत्य फलत्वेनोक्तम्। अत्र तु सुखमपि दुःखरूपेण भावनीयमिति मुमुक्षूणां प्रमेयतया दुःखमभिधीयते। पूर्वं क्षणिकत्वदुःखोदर्कत्वादिना प्रमितमपि संप्रति दुःखत्वेन भावनीयतया पुनरुपदेश इति यावत्। यत्तु सुखं नास्त्येवेति कैश्चिदुक्तं तन्न। स्वर्गकामो यजेतेत्यादिश्रुतिविरोधात्। न हि दुःखार्थं कश्चन यागादिकमनुतिष्ठेत् ॥ ५० ॥

**देहः षडिन्द्रियाणि च षड्विषयाश्चापि बुद्धयः षट् च।**
**सुखमपि दुःखमपि तथा दुखं स्यादेकविंशतिधा ॥ ५१ ॥**

शरीर, छह इन्द्रियाँ, छह विषय, छह बुद्धियाँ, सुख और दुःख—ये इक्कीस दुःख हैं।

सुखमपि चेति चकारेण सूचितानि दुःखान्तराण्यप्याह—देह इति। एकविंशतिरिमानि दुःखत्वेन भाव्यानि मुमुक्षुभिः ॥ ५१ ॥

**तदत्यन्तविमोक्षोऽपवर्गः । ( १.१.२२ )**

**दुःखात्यन्तविमोक्षं प्राहुः परमं पुमर्थमपवर्गम् ।**
**दुःखं जन्मादिकमपि तेन विमुक्तः कृतार्थः स्यात् ।। ५२ ।।**

दुःख का आत्यन्तिकध्वंस पुरुषार्थरूप अपवर्ग कहाता है। जन्मादि भी दुःख ही हैं, उनसे रहित होने पर पुरुष कृतार्थ हो जाता है ।। ५२ ।।

अपवर्गं निरूपयति—दुःखेति। स्वसमानाधिकरणदुःखासमानकालीनदुःखध्वंसो मोक्षः। वर्तमानदुःखध्वंसस्यानन्तकालस्थायित्वाद् भविष्यद्दुःखेन समानाधिकरणत्वात्तद्व्यावृत्तिः। चरमदुःखध्वंस एव तथा। एकविंशतिदुःखध्वंसो मोक्ष इत्यस्याप्यत्रैव तात्पर्यम्। षडिन्द्रियान्तर्गतश्रोत्रमनसोर्ध्वंसायोगात् ।। ५२ ।।

**[1]नित्यसुखप्रतिपत्तिं केचन जगदुर्विपश्चितो मोक्षे ।**
**रागाभावात्तस्मिन् किं नु सुखे स्यादभिव्यक्ते ।। ५३ ।।**

कुछ आचार्य मोक्ष में नित्यसुख की अभिव्यक्ति स्वीकारते हैं। किन्तु मोक्ष काल में किसी तरह के राग के न होने से नित्यसुखाभिव्यक्ति निष्प्रयोजन होने से अवश्य मान्य नहीं ।। ५३ ।।

केचन सुधियो मोक्षे नित्यसुखाभिव्यक्तिमाहुः। किन्तु मोक्षकाले रागाभावान्नित्यसुखाभिव्यक्तेः प्रयोजनं किं स्यात् ।। ५३ ।।

**द्वेषाभावान्मा भूद् दुःखध्वंसोऽपि तस्य चेन्न हि तत् ।**
**कारणविरहात् संप्रति दुःखनिवृत्त्यर्थयत्नाच्च ।। ५४ ।।**

शंका—मोक्षावस्था में द्वेष भी न रहने से दुःखध्वंस भी निष्प्रयोजन है ? समाधान—यद्यपि दुःख के रहने पर भी कोई अनुपपत्ति नहीं, तथापि वस्तुस्थिति यह है कि वह ध्वस्त हो जाता है। किंच बन्धकाल में दुःख से द्वेष है ही अतः 'उसका ध्वंस होगा' ऐसा मानकर मोक्षार्थ प्रवृत्ति संगत हो जाती है ।। ५४ ।।

ननु मोक्षकाले द्वेषाभावाद् दुःखमपि भवतु किमात्यन्तिकदुःखध्वंसेन, न च स एव मोक्ष इति वाच्यम्। रागद्वेषात्यन्तिकनिवृत्तिर्मोक्ष इति लक्षणान्तरसंभवादिति चेन्न। यद्यपि दुःखे सति न किंचिदनुपपन्नम्।

---

१. पाठान्तर—नित्यसुखाभिव्यक्ति।

तथापि दुःखं ध्वंसत एव, दुःखान्तरोत्पत्तौ कारणं च नास्तीत्यद्वेषिणोऽप्यात्यन्तिकदुःखध्वंसः स्यादेव। बन्धनकाले च द्विष्टत्वाद् दुःखस्य तद्ध्वंसार्थाप्रवृत्तिर्नानुपपन्ना। भवन्मते तु सुखाभिव्यक्तेः स्वतः प्राप्तिविरहात् कल्पनीयत्वान्निष्प्रयोजनकल्पनागौरवमेव ॥ ५४ ॥

**एतेनेदमपास्तं द्वेषाभावे प्रवर्ततां पुरुषः।**
**नियतत्वाद् दुःखहतेर्दुःखद्वेषाच्च संसारे ॥ ५५ ॥**

अतः द्वेषाभावसम्पत्ति के लिये मोक्षार्थप्रवृत्ति होती है, यह मत खण्डित हो गया। दुःखध्वंस मोक्षकाल में निश्चित है व संसार या प्रवृत्तिकाल में दुःखद्वेष भी है; एवं च वह ( दुःखध्वंस ) उद्देश्य हो यही संगत है ॥ ५० ॥

दुःखे सत्यपि द्वेषाभावादेव तस्याकिंचित्करत्वाद् द्वेषाभावे एव प्रवृत्तिरस्तु न तु दुःखध्वंसात्मकमोक्षे इत्यप्येतेन निरस्तम्। दुःखध्वंसावश्यंभावात् संसारकाले दुःखद्वेषसत्त्वेन तद्ध्वंसोपायकथनस्यैव पुरुषप्रवृत्तिजनकत्वाच्च ॥ ५५ ॥

**ननु निजरागाभावादात्मध्वंसोऽपि भवतु शून्योऽस्तु।**
**मैवं नित्यध्वंसः कथमिव शक्यः प्रकल्पयितुम् ॥ ५६ ॥**

प्रश्न – मोक्षकाल में आत्मा से भी राग न होने के कारण आत्मध्वंस भी मान लिया जाये, एवं च शून्य ही रहे ? उत्तर—यह कल्पना अनुचित है क्योंकि नित्य होने से आत्मध्वंस असम्भव है ॥ ५६ ॥

नन्वेवं मोक्षकाले आत्मरागस्याप्यभावादात्मध्वंसोऽपि भवत्विति शून्यवादविजयः स्यादिति चेन्न। नित्यात्मध्वंसस्य कल्पयितुमशक्यत्वात् ॥५६॥

**अन्तर्गडुरात्मायमनादिध्वंसोऽपि भवतु निर्वाणात्।**
**मैवमनित्यत्वेऽपि च कस्तव लाभो वृथा यतितुः ॥ ५७ ॥**

शंका—तथापि निष्प्रयोजन होने से आत्मा को नित्य न मान अनादि किन्तु नश्वर मान लो ? समाधान—ऐसा नहीं मान सकते। नित्य आत्मा पूर्व में सिद्ध हो चुका है; तथा वादी को आत्मनाश मानने से क्या लाभ ॥ ५७ ॥

एवमपि निरर्थक एवायमात्मा तदा स्यात्। तद्वरं निर्वाणन तस्य नाश इति चेन्न। नाशेनापि तव को लाभः ? अनादिभावस्याकाशादेरिव नित्यत्वे तादृशनियमभञ्जनक्लेशमात्रमतिरिच्येत। क्षणिकविज्ञानवादस्य स्मरणानुपपत्त्यादिना प्रागेव निरस्तत्वात् ॥५७॥

**स्वीयध्वंसाय तथा प्रेक्षावान् कः पुमान् प्रवर्तेत ।**
**उपदेशानर्थक्यं समन्तभद्रस्य तत्र स्यात् ॥ ५८ ॥**

कोई भी विवेकशील व्यक्ति अपने नाश के लिये प्रवृत्ति नहीं करता । अतः मोक्ष में आत्मध्वंस मानों तो बुद्ध का उपदेश बुद्धिमानों के लिये तो व्यर्थ ही हो जायेगा, मूर्खों को भले ही जंचे ॥ ५८ ॥

को वा प्रेक्षावान् पुमान् स्वध्वंसाय प्रवर्तेत । तथा चोपदेशानर्थक्यं समन्तभद्रस्यापद्येत प्रेक्षावत्सु । कामं मूढेषु पदं स लभताम् ॥५८॥

**ननु काष्ठलोष्ठतुल्यस्थितिमपि को वष्टु मोक्षनिर्दिष्टाम् ।**
**मैवं दुखःध्वंसायैव विपश्चित्प्रवर्तेत ॥५९॥**

शंका—आप नैयायिक के मत में भी मोक्षावस्था में लकड़ी के टुकड़े की तरह ज्ञान, सुखादि से रहित अवस्था किसे इष्ट होगी ? समाधान—बुद्धिमान् तो दुःखध्वंस के लिये ही मोक्षार्थ प्रवृत्त हो सकता है, अतः दोष नहीं ॥ ५९ ॥

ननु न्यायमतेऽपि मोक्षे काष्ठलोष्टादितुल्या स्थितिः स्यात् । ज्ञानसामग्र्यभावेन ज्ञानानुत्पत्तेः सुखाद्यभावाच्च । तथा चैवंविधां स्थितिं को वाञ्छेदिति न्यायशास्त्रोपदेशानर्थक्यमपीति चेन्न । दुःखस्य द्विष्टत्वेन तदात्यन्तिकध्वंसाय पुरुषप्रवृत्त्युपपत्तेः । सुखं दुःखाभावश्च पुरुषार्थौ न त्वात्मध्वंसादिः ।

**ईशवदपरे जीवे नित्यं बोधं जगुस्तथा रागम् ।**
**नित्यं सुखमपि सर्वं मोक्षाभिव्यङ्ग्यमप्याहुः ॥ ६० ॥**

किंच कुछ आचार्यों के मत में तो मोक्षावस्था में जीव में नित्य ज्ञान, राग व नित्य सुख की अभिव्यक्ति स्वीकारते हैं क्योंकि इन्हें वे ईश्वर की तरह जीव में भी मानते हैं । इस पक्ष में तो मोक्षार्थ प्रवृत्ति सुलभतर है ॥ ६० ॥

अपरे तु यथा ईश्वरे नित्यज्ञानं नित्येच्छा च तथा जीवेऽपि नित्यबोधनित्यरागौ भवेताम् तथा नित्यसुखमपि । मोक्षेण संसारप्रतिबन्धनिवृत्तौ तान्यभिव्यज्यन्त इति वदन्ति । एतदभिप्रेत्याह भाष्यकारः—"मुक्तस्य नित्यं सुखं भवति अथवा न भवति नास्योभयोः पक्षयोर्मोक्षाधिगमे विकल्प इति । अत्र टीका—एवं वैराग्येण मोक्षमाणस्य प्रवृत्तौ सत्यां प्रसक्तस्य यदि नित्यं सुखं भवति कामं भवतु । इत्यादिः । पक्षान्तरं तु न्यायशास्त्रप्रसिद्धत्वान्न निरसनयोग्यमिति न निरस्तं भाष्यटीकाभ्यामिति ध्येयम् ॥६०॥

**इति चतुर्थं प्रकरणं प्रमेयवर्णनम् ।**

# अथ प्रमितिसाधनप्रकरणम्

**समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः। (१.१.२३)**

**अथ निर्मलबोधार्थं प्रोक्तानां संप्रति प्रमेयाणाम्।**
**आवश्यके विचारे प्रस्तूयन्ते तदङ्गानि ॥ १ ॥**

पूर्वोक्त प्रमेयों के स्पष्ट ज्ञानार्थ उनके अंगों का निरूपण किया जाता है।

निरूपितानि प्रमेयाणि। तेषां बोधोपयोगितया प्रमाणानि च। तेषां विशुद्धं ज्ञानं न तावच्छ्रवणादिमात्रेण। प्रत्यक्षेण स्वार्थानुमानेन शब्दादिना चावगतेऽप्यर्थे वादिप्रत्यवस्थानेन प्रामाण्यादिसंशयोत्पत्तेस्तस्य फलपर्यवसायित्वाभावात्। तथा च यत्र वादिभिः सह विचारस्तदर्थानि संशयादीन्यङ्गानि निरूपणीयानीति तानि प्रस्तूयन्ते ॥ १ ॥

**संशयमङ्गं प्राहुर्विरुद्धकोटयोरुपस्थितिप्रभवम्।**
**स निवर्तते विचारजविशेषविज्ञानसापेक्षः ॥ २ ॥**

दो विरुद्ध कोटियों की उपस्थिति होने पर उत्पन्न होने वाले संशय को विचारांग बताया गया है। विचार-जनित विशेष ज्ञान से संशय निवृत्त होता है।

एकस्मिन् धर्मिणि विरुद्धकोटिद्वयावगाहिज्ञानं संशयः। तं प्रथमं विचाराङ्गमाहुः। स च संशयो विचारजन्यविशेषविज्ञानसापेक्षः सन्निवर्तते। ननु संशयः कुतो विचाराङ्गम्। न चानुमित्यात्मकविचारे पक्षतासम्पादकतया। सिषाधयिषाविरहसहकृतसाधकमानाभावलक्षणपक्षतायाः संशयाऽघटितत्वादिति चेन्न। अत्यन्तसंशयविरहे विचारस्य निष्प्रयोजनत्वापत्तेः। श्रवणानन्तरं मननविधानमपि प्रमेयसंशयनिवृत्तिप्रयोजकनिश्चयविशेषार्थमेव। नहि प्रत्यक्षत्वादिना निश्चिते फलाधिक्यविरहे सिषाधयिषा संभवति। सिद्धे नेच्छेति सिद्धान्तात्। एतेनेच्छाया निरङ्कुशत्वात् प्रत्यक्षसिद्धेऽप्यनुमितित्वेनेच्छा संभवतीति प्रत्युक्तम्। निरङ्कुशत्वादेव सिद्धेऽपीच्छासंभवेनोक्तसिद्धान्तभङ्गापत्तेः। क्वचित्प्रामाण्यसंशयमुत्थाप्य विषयसंशये जाते एव विचारो भवेत्। पामरादीनां प्रत्यक्षादिना संतोषेऽपि तार्किकैः प्रामाण्यसंशयोत्थापनसंभवात्। अत एव मीमांसकैरपि "विषयो विशयश्चैवे" त्येवमधिकरणलक्षणे विशयस्यापि ग्रहणम्। सूत्रकृता च परीक्षाप्रकरणे तत्र

तत्र संशयप्रदर्शनं संगच्छते। न च जल्पादौ विजिगीषोः संशयो न संभवतीति वाच्यम्। तस्यानुमितिरपि नास्त्येव। परप्रत्यायनार्थत्वान्न्यायप्रयोगस्य। प्रतिवादिनो यदि नास्ति संशयस्तदा स वादिनं निरस्यति। अन्यथा स्वमते संशयोत्पत्त्या तस्य विपरीतानुमितिर्भवति। न चैवमनुमितौ पूर्वं संशयसिद्धावपि विचारे संशयपूर्वकत्वनियमो नास्तीति वाच्यम्। तत्रापि विप्रतिपत्त्या मध्यस्थादेः संशयोत्पत्तिसत्त्वात्। यत्र तु पक्षद्वयमेव न तु मध्यस्थः कश्चित् तत्र विचारेण कश्चिन्निर्णयोऽपि न भवत्येव। द्वयोरपि पक्षयोः स्वस्वमताभिनिवेशात्। नहि मोक्षशास्त्रे एवंविधविचारोपयोगः। तथाविधजल्पस्य त्याज्यतयैव मुमुक्षूणां ज्ञेयत्वम्। अथवा वादजल्पवितण्डादीनां यथा सर्वत्र न विचाराङ्गत्वं युगपदसंभवात्तथा क्वचित्संशयो मास्त्वङ्गमिति समाधेयम्॥ २॥

**साधारणस्य दृष्टेरथवाऽसाधारणस्य धर्मस्य।**
**विप्रतिपत्तेरपि स प्रमाण्यादेश्च संशयतः॥ ३॥**

संशय की उत्पत्ति विलक्षण वस्तुओं के साधारण धर्म के या आसाधारण धर्म के दर्शन से, विप्रतिपत्तिवाक्य से तथा प्रामाण्य आदि के संशय से होती है।

स्थाणुपुरुषोभयसाधारणोच्चैस्त्वादिदर्शनात् तदुपस्थितकोटिद्वयेन स्थाणुर्वा पुरुषो वेति संशयः। निश्चितनित्यानित्यगगनघटादिव्यावृत्तशब्दत्ववानयमित्यसाधारणधर्मदर्शनोपस्थितकोटिद्वयतः शब्दो नित्यो न वेति संशयः। शब्दो नित्यो न वेति विप्रतिपत्तिवाक्यजनितकोटिद्वयोपस्थितावपि तथा। ज्ञाने प्रामाण्यसंशयाद् विषयसंशयो भवति। अप्रामाण्यसंशयाच्च। चकारेण व्याप्यसंशयादिपरिग्रहः। वह्निर्धूमव्याप्यो न वा धूमव्यभिचारी न वेत्यादिसंशयाद्धूमादिसंशयोत्पत्तेः। अत्र नव्याः। धर्मिणि तद्धर्मबाधतत्सामग्रीविरहकालीनधर्मिधर्मोपस्थितौ तद्धर्मप्रकारकधीर्जायते। तत्र धर्मद्वयस्य विरुद्धस्य तथोपस्थितौ संशयो भवति।. सत्प्रतिपक्षस्थले तदभावव्याप्यत्ताज्ञानं तद्वत्ताबाधजनकं तद्वत्ताव्याप्यवत्ताज्ञानं च तदभाववत्ताबाधजनकमिति बाधसामग्रीसद्भावान्न संशय इति। तदसत्। सत्प्रतिपक्षस्थले संशयस्यानुभवसिद्धत्वात्। यदि तत्र बाधसामग्र्यौ विद्येते कथं न बाधौ जायेयाताम्। तथा च विरुद्धधर्मद्वयनिश्चय आपद्येत। यदि च तद्वत्ताव्याप्यवत्त्वनिश्चयविरहसहकृततदभावव्याप्यवत्तानिश्चयादेव तदभावनिश्चयः एवं तदभावव्याप्यवत्तानिश्चयविरहसहकृततद्वत्ताव्याप्यवत्त्व-

निश्चय एव च तद्वत्ताज्ञानजनकइत्युच्यते तदा परस्परबाधसामग्रीसद्भावकथनं कथमुपपद्येत । तस्माद् वह्निव्याप्यधूमज्ञानाद् व्यह्न्यभावव्याप्यजलज्ञानाच्च कोटिद्वयोपस्थितिमात्रं भवति, तेन च संशयो दुर्वार एव। यत्तु तद्वत्त्वादि बुद्धिजनकतावच्छेदकविषयतावत्त्वमात्रेण संशय प्रतिबन्धकत्वं कैश्चिदुक्तम् । तत्तुच्छम् । तादृशज्ञानेऽप्रामाण्यसंशयादिसत्त्वेऽपि तादृशविषयतासत्त्वेन सन्देहाभावप्रसङ्गात् । तस्मादुपलब्ध्यनुपलब्ध्यव्यवस्थेति सौत्रशब्देन सत्प्रतिपक्षोऽपि ग्राह्य एव ॥ २ ॥

**यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम् ( १.१.२४ )**

**विषयः प्रवृत्तियोनेरिच्छायाः स्यात्प्रयोजनं नाम ।**
**सुखःदुखाप्तिपरिहृती तत्साधनमपि तादृशं भवति ॥ ४ ॥**

प्रवृत्ति की हेतुभूत इच्छा का विषय प्रयोजन कहाता है। सुखप्राप्ति व दुःखनिवृत्ति मुख्य प्रयोजन एवं उनके साधनों की प्राप्ति-निवृत्ति गौण प्रयोजन हैं।

प्रवृत्तिहेतुभूतेच्छाविशेष्यत्वं प्रयोजनत्वम् । चन्द्रमण्डलं मे स्यादितीच्छाविषयेऽतिव्याप्तिवारणाय प्रवृत्तिहेत्विति । सुखदुःखप्राप्तिपरिहारौ इतरेच्छानधीनेच्छाविषयत्वान्मुख्यं प्रयोजनम् । तत्साधनं गौणं प्रयोजनम् । तादृशं भवति = प्रयोजनं भवति ॥ ४ ॥

**अत्र च साध्यत्वाख्यो भवति विषयताविशेष एषैव ।**
**उद्देश्यतेति तावल्लक्षणमाचक्षते केचित् ॥ ५ ॥**

साध्यत्वनामक विषयताविशेष ही उद्देश्यता है और उद्देश्यतावत्त्व ही प्रयोजनत्व है— ऐसा कुछ विद्वान् इस विषय में मत रखते हैं ॥ ५ ॥

अत्र च साध्यत्वाख्यः कश्चन विषयताविशेष एव। एषैवोद्देश्यता नाम। तद्वत्त्वमेव प्रयोजनत्वमिति केचिद्विद्वांस आचक्षते। तन्मते प्रवृत्तियोनेरित्युपलक्षणमात्रम् । तेन सुखत्वादिकं न प्रयोजनम् ॥ ५ ॥

**यद्यपि फलं पुरोक्तं किन्तूद्देश्यत्वमन्तरापि च तत् ।**
**शास्त्रप्रयोजनं पुनरत्रेष्टं तत्प्रवृत्त्यर्थम् ॥ ६ ॥**

यद्यपि फल के विषय में पूर्व में कहा जा चुका है तथापि वहाँ फलमात्र को बताया था, उद्देश्य को नहीं। यहाँ विशेष विवक्षा शास्त्रप्रयोजन की है। मोक्षार्थ प्रवृत्ति हो यह यहाँ अभिप्रेत है।

ननु प्रमेयेषु फलं दर्शितम्। सुखदुःखाभावौ च फलमेवेति किमिदमतिरिक्तमुच्यत इति चेन्न। उद्देश्यतारहितस्यापि फलत्वाद् दुःखमपि फलमेव। न हि तत्प्रयोजनम्। न हि दुःखमुद्दिश्य कश्चित्प्रवर्तते। कर्मणां फलावश्यंभावात्संसारधाराप्रवृत्तेस्ततो निवृत्त्यर्थं फलोपदेशः। इह तु प्रवृत्त्यर्थं प्रयोजनोपदेशः। ननु प्रवृत्तौ सत्यां विहितमिव प्रतिषिद्धमप्यापद्यत इति तदुपदेशो व्यर्थ इति चेन्न। शास्त्रप्रयोजनस्य मुख्यतया लिलक्षयिषितत्वात्। शास्त्रप्रवृत्त्या तत्त्वज्ञानं भवति। तत्र सुखं शास्त्ररसिकानां प्रसिद्धम्। तत आत्यन्तिकदुःखनिवृत्तिरपि। न चापवर्गस्य प्रमेयत्वोक्त्या दुःखनिवृत्तिलक्षणशास्त्रप्रयोजनस्य गतार्थतेति वाच्यम्। शास्त्रप्रयोजनत्वेन तस्य ज्ञेयत्वाय तस्य पुनरुक्तिः। सा च शास्त्रे प्रवृत्त्यर्था। तथा च प्रवृत्तियोनीति साकूतम्। इदं तु बोध्यम्। प्रयोजनसामान्यमिहाभिधीयते व्युत्पत्तये। शास्त्रस्य प्रस्तुतत्वाद्विशेषप्रवृत्तिरर्थसिद्धा भवति॥ ६॥

**लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः। (१.१.२५)**

**बुध्यन्त्यन्वयमथ वा व्यतिरेकं साध्यलिङ्गयोर्यत्र।**
**लोकाः परीक्षकाश्चाप्येतं निगदन्ति दृष्टान्तम्॥ ७॥**

सामान्य एवं विचारवान् लोग जिस स्थान में साध्य-साधन का अन्वय या व्यतिरेक स्वीकारते हों, उसे दृष्टान्त कहते हैं।

साध्यलिङ्गयोरन्वयं वा व्यतिरेकं वा यत्र लोकादयः प्रतियन्ति स दृष्टान्तः। पारिषद्या लोकाः। वादिप्रतिवादिमध्यस्थाः परीक्षकाः। केचित्तु वादिप्रतिवादिनोर्निश्चयमात्रं दृष्टान्तताप्रयोजकं वदन्ति। परं तु पारिषद्या यदि न प्रतीयुस्तदा तदुपस्थितिवैयर्थ्यं स्यादिति लोकानामपि ग्रहणम्। परीक्षकाः शास्त्रविचारसंलग्नाः। दृष्टान्तो विचाराङ्गम्॥ ७॥

**ननु चावयवेषूदाहरणं वाच्यं ततः कृतार्थत्वात्।**
**दृष्टान्तः किमिति पृथङ् मुख्येष्वभिधीयतेऽर्थेषु॥ ८॥**

प्रश्न—अवयवों के अन्तर्गत उदाहरण आ ही जाता है अतः अवयवरूप विभाग बता देने पर उदाहरण भी बता दिया गया, उसे मुख्य पदार्थों की गणना में पृथक् क्यों गिना?

न्यायप्रयोगे उदाहरणं दृष्टान्तरूपमेवेति न्यायावयवात् पृथक्कृत्य मुख्यषोडशपदार्थपूरणतया दृष्टान्तः कुतो निर्दिश्यत इत्याशङ्क्ते—

न्विति। न च दृष्टान्तकथनमवयवान्तर्गतम्। इह तु दृष्टान्त उच्यत इति विशेष इति वाच्यम्। दृष्टान्तस्वरूपबोधस्य दृष्टान्तकथनार्थत्वात्तावन्मात्रेण पदार्थपार्थक्यकरणवैयर्थ्यात्। तथा सति हेत्वादिरपि पृथग्वाच्यः स्यात्। हेतुकथनस्यैवावयवान्तर्गतत्वात् ॥ ८ ॥

**नैवमुदाहरणं स्यात्साध्यव्याप्तेः प्रदर्शनं यत्र।**
**तद्धटको दृष्टान्तस्तर्कप्रभृतिष्वपीष्टोऽसौ ॥ ९ ॥**

उत्तर–अवयवान्तर्गत उदाहरण व्याप्तिप्रदर्शनविशिष्ट दृष्टान्त है। एवं च उदाहरण का घटक दृष्टान्त है। अतः उसका पृथक् निर्देश संगत है। तर्क आदि में में व्याप्तिप्रदर्शन के विना भी दृष्टान्त का प्रयोग होता है।

मैवमिति। यो यो धूमवान् स स वह्निमान्, यो न वह्निमान् स न धूमवानिति व्याप्तिप्रदर्शनविशिष्टो दृष्टान्त उदाहरणम्। तत्र दृष्टान्तो नाम क इति न लक्ष्यते। स पुनरत्रोच्यते। दृष्टान्तः पुनस्तर्कादावपि उपयुज्यते। आकाशवदात्मा व्यापक इत्यादौ व्याप्तिप्रदर्शनविरहेऽपि दृष्टान्तोपयोगात् ॥ ९ ॥

**तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः। (१.१.२६)**

**अधिकृत्य तन्त्रमर्थे यस्मिन्नवसीयतेऽभ्युपगमस्तु।**
**सिद्धान्तः स चतुर्धा भेदैः स्यात्सर्वतन्त्राद्यैः ॥ १० ॥**

जिस शास्त्रीय अर्थ की स्वीकृति निश्चित होती है, उसे सिद्धान्त कहते हैं, अर्थात् शास्त्र का निश्चित अर्थ या शास्त्र के अर्थ का निश्चय सिद्धान्त कहाता है। वह पुनः चार प्रकार का होता है।

सिद्धान्तं निरूपयति—अधिकृत्येति। तन्त्रमाश्रित्य यस्मिन्नर्थेऽभ्युपगमोऽवसीयते परिसमाप्तिं गच्छति स सिद्धान्तः। सिद्धस्य = तन्त्रनिश्चितस्यान्तः पर्यवसानं न तत्र विशेषणादिकं परिशिष्यत इति। सोऽभ्युपगमावसानं वा, अवसिताभ्युपगमो वा, अवसिताभ्युपगमविषयार्थो वा यथाप्रयोगं बोध्यः। घटपटादिनिश्चये सिद्धान्तत्वव्यवहाराभावात्तन्त्रमधिकृत्येत्युक्तम्। शास्त्रनिश्चितार्थः शास्त्रार्थनिश्चयो वा सिद्धान्त इति लघुलक्षणम्। स सिद्धान्तः सर्वतन्त्रादिभेदैश्चतुर्धा भवति ॥ १० ॥

**अविरुद्धः सर्वेषां तन्त्रार्थः सर्वतन्त्रसिद्धान्तः।**
**परतन्त्रासिद्धत्वे स पुनः प्रतितन्त्रसिद्धान्तः ॥ ११ ॥**

जो बात सभी मतों से अविरुद्ध हो, उसे सर्वतन्त्रसिद्धान्त कहते हैं। जो बात केवल एक वादी के मत से सिद्ध व अन्य मतों में असिद्ध हो, उसे प्रतितन्त्रसिद्धान्त कहते हैं।

सर्वेषां तन्त्राणामविरुद्धोऽथ च तन्त्रार्थो यः स सर्वतन्त्रासिद्धान्तः। प्रमाणादयः सर्वतन्त्रसिद्धान्ताः। क्वचित्संख्यायां विशेषः। परतन्त्रासिद्धः स तन्त्रार्थः स्वीयतन्त्रमात्रसिद्धोऽर्थः इति यावत् प्रतितन्त्रसिद्धान्तः। समानतन्त्र इति सूत्रे समानशब्द एकपर्यायः। तुल्यार्थ इत्यपरे ॥ ११ ॥

**यत्सिद्धौ प्रकृतार्थः सिद्धः स्यात्सोऽधिकरणसिद्धान्तः।**
**अभ्युपगमसिद्धान्तोऽनुक्ताऽप्रतिकूलसंश्रयणम् ॥ १२ ॥**

जिसके सिद्ध होने पर प्रकृत अर्थ सिद्ध होता हो, वह अधिकरणसिद्धान्त कहा जाता है। सूत्रादि में न भी माना गया हो पर स्वमत प्रतिकूल न हो, ऐसी बात स्वीकरना अभ्युपगमसिद्धान्त है।

यस्य सिद्धौ सत्यां प्रकृतविचारार्थः सिध्यति सोऽधिकरणसिद्धान्तः। यथा जगत्कर्तृत्वेनेश्वरसाधने सर्वज्ञत्वम्। तेन विना जगत्कर्तृत्वानुपपत्तेः। यथा वा प्रत्यक्षेण घटादेः स्थूलत्वसिद्धौ क्षणभङ्गवादभङ्गः। अनुक्तस्य सूत्रादौ किं च स्वाऽप्रतिकूलस्यार्थस्य संश्रयणमभ्युपगमः सोऽयमभ्युपगमसिद्धान्तः। यथा मनस इन्द्रियत्वम्। न चाधिकरणसिद्धान्तादस्यानर्थान्तरता। अर्थापत्त्या या सिद्धिः सोऽधिकरणसिद्धान्तः। परोक्तस्य स्वाऽप्रतिकूलस्य परीक्षणमभ्युपगमसिद्धान्तः इत्यर्थान्तरत्वात्। परोक्तमप्यभ्युपगम्यते यदि स्वसिद्धान्तविरोधो न स्यात्। भाष्यकारस्तु शब्दो द्रव्यमिति केनचिदुक्ते अस्तु द्रव्यं तथापि स नित्यो न वेति विचारयाम इति द्रव्यत्वस्वीकारोऽभ्युपगमसिद्धान्त इति व्याचख्यौ। तत्तु वार्तिककारादयो न मेनिरे। सिद्धान्तसामान्यलक्षणे तन्त्रस्वीकृतस्यैव सिद्धान्तकथनात्। किन्तु सूत्रे स्वीयतन्त्रेत्यनुक्तेः शब्दो द्रव्यविशेष इति तन्त्रविशेषस्वीकृतत्वात्कथं तन्निरासो युक्तः। परतन्त्रस्वीकृतार्थाभ्युपगमोऽभ्युपगमसिद्धान्तः इति लक्षणसंभवात्। स्वीयतन्त्राविरुद्धत्वे त्वधिकरणसिद्धान्त इति तत्र विशेषः। इत्थं चाऽपरीक्षिताभ्युपगमादिति सौत्रविशेषणस्यापि संगतिः। अन्यथाऽपरीक्षितेऽर्थे भवन्मतेऽपि सिद्धान्तसामान्यलक्षणविरहापत्तेः ॥ १२ ॥

**प्रतिज्ञाहेतूदाहरणोपनयनिगमानान्यवयवाः ( १.१.३२ )**

**उचितानुपूर्व्युपेतं भवेत् प्रतिज्ञादिपञ्चकं न्यायः ।**
**तज्जनितशाब्दबोधान्मध्यस्थादेः परामर्शः ॥ १३ ॥**

उचित आनुपूर्वी सहित प्रतिज्ञादि पाँच के समुदाय को न्याय कहते हैं। न्याय वाक्य से मध्यस्थ आदि को अनुमितिजनक लिंगपरामर्श होता है ॥१३॥

अवयवनिरूपणार्थं तल्लक्षणघटकं सामान्यरूपात्मकं वा न्यायं लक्षयति—उचितेति । प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनरूपा या उचितानुपूर्वी तदुपेतं प्रतिज्ञादिपञ्चकसमुदायत्वं न्यायत्वम् । पक्षे साध्यनिर्देशः प्रतिज्ञेत्येवं लक्षिताः प्रतिज्ञादयः । ते च न्यायान्तर्गतत्वेन विशेषलक्षणे वक्ष्यन्ते । न्यायलक्षणघटकप्रतिज्ञादयस्तु न न्यायान्तर्गतत्वेन विशेषणीयाः । व्यर्थत्वात् । एवं च नान्योन्याश्रयतापत्तिः । तत्तत्प्रतिज्ञादिलक्षणे न्यायान्तर्गतत्वविशेषणादुदासीनसमानानुपूर्वीकवाक्यव्युदासः । न्यायवाक्यप्रयोजनमाह—तज्जनितेति । न्यायवाक्यजनिताच्छाब्दबोधादनुमितिजनको लिङ्गपरामर्शो भवति । तथा च लिङ्गपरामर्शप्रयोजकशाब्दबोधजनकवाक्यं न्याय इति चिन्तामणिकारोक्तलक्षणमपि सूचितम् । न च तथा चायमित्युपनयवाक्यस्य वह्निव्याप्यधूमवांश्चायमित्यर्थत्वात्तेनैव परामर्शः संभवतीति वाच्यम् । तथापदस्य सर्वनामत्वात्सर्वनामोच्चारणसंप्रदायात्पूर्वावयवानुच्चारणे तावन्मात्रेण परामर्शानुपपत्तेः ॥ १३ ॥

**अन्यतमोऽवयवः स्याद्यो न्यायान्तर्गतः प्रतिज्ञादेः ।**
**तच्छाब्दधिया शाब्दी धीस्तु परामर्शजननी स्यात् ॥ १४ ॥**

न्यायान्तर्गत प्रतिज्ञा आदि अवयव हैं। प्रत्येक अवयव से शाब्दबोध होता है जिससे पुनः महावाक्यार्थबोध होता है जो परामर्श का जनक है।

न्यायान्तर्गतः प्रतिज्ञाद्यन्यतमोऽवयवः । प्रतिज्ञाद्यन्यतमजनितशाब्दबोधेन पश्चात् पञ्चावयवसमुदायजनितो महावाक्यार्थबोधो भवति। ततः परामर्शः । तथा चानुमितिजनकलिङ्गपरामर्शजनकशाब्दबोधजनकशाब्दधीविषयत्वमवयवत्वमिति मणिकृदुक्तं लक्षणं सूचितम्। दीधितिकृन्मते पूर्वार्धोक्तं लक्षणम् । तस्यावयवत्वं कुतः स्वीकार्यमित्यतस्तत्कार्यपरम्परामुत्तरार्धेनाहेति तन्मतेन व्याख्या । प्रतिज्ञाद्यन्यतमत्वं च प्रतिज्ञात्वहेतुत्वो-दाहरणत्वो-पनयत्व-निगमनत्वभेदपञ्चकावच्छिन्नप्रतियोगिताकभेदा -

श्रयधर्मवत्त्वम् । तेन प्रतिज्ञादिभिन्नघटादिभेदस्याऽव्यासज्यवृत्तितया प्रतिज्ञाद्येकदेशवर्तित्वेऽपि न क्षतिः। प्रतिज्ञाद्यघटकत्वे सत्युभयघटकभागद्वयाघटितत्वं वा प्रतिज्ञाद्यन्यतमत्वस्थाने वक्तव्यमिति तु दीधितिकृतः ॥१४॥

**पक्षे साध्यविधेयकनिर्देशो न्यायगः प्रतिज्ञा स्यात् ।**
**व्याप्त्या तज्ज्ञपनार्थकविभक्तियुक्तस्तथा हेतुः ॥ १५ ॥**

न्यायान्तर्गत उस वाक्य को प्रतिज्ञा कहते हैं जो पक्ष में साध्यविधेयकनिर्देश करे। व्याप्ति द्वारा प्रतिज्ञा-साधक वाक्य को हेतु कहते हैं, वह पंचम्यादि तादृशबोधक विभक्ति से युक्त रहता है ॥ १५ ॥

पक्षतावच्छेदकविशिष्टपक्षोद्देश्यकसाध्यतावच्छेदकावच्छिन्नविधेयताकबोधजनकं न्यातान्तर्गतं वाक्यं प्रतिज्ञा। उद्देश्यत्वविधेयत्वयोः प्रवेशात् पर्वतो वह्निमानिति, अस्ति पर्वते वह्निरित्यस्य च संग्रहः। अपूर्वबोधविषयत्वेन विवक्षिते एव विधेयता भवतीत्युपसंहाररूपे निगमने नातिव्याप्तिः। हेतुं लक्षयति व्याप्त्येति। धूमादिति पञ्चम्या ज्ञापकत्वं ज्ञाप्यत्वं वाऽर्थः। तच्च साध्यव्याप्त्या। व्याप्तिसम्बन्धप्रयुक्तज्ञानजनकत्वं तादृशज्ञानविषयत्वं वेति यावत्। पूर्वोक्तसाकाङ्क्षत्वात् साध्यव्याप्तिलाभः। न तु यथाकथंचित्सम्बन्धेन। अन्यथा हस्तिपकवान् गजादित्यादेः सद्धेतुत्वं स्यात्। वने व्यभिचारेऽपि राजप्रासादादौ हस्तिपकज्ञानोत्पत्तेः। न्यायप्रयोगस्थले व्याप्तिघटितार्थबोधकत्वमेव पञ्चम्याः। निगमने तु तस्मादित्यस्य वह्निव्याप्यधूमवत्त्वादित्यर्थत्वात् प्रकृतेरेव व्याप्त्यर्थकत्वं न तु विभक्तेरिति नातिव्याप्तिः। पर्वतो वह्निमान् वह्निव्याप्यधूमवत्त्वादिति प्रयोगस्तु न सांप्रदायिक इति नाव्याप्तिः। प्रकृतसाध्यव्याप्तिनिवेशाद् धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादौ पक्षे नातिव्याप्तिः। पञ्चम्यर्थघटकव्याप्तिश्च यथातात्पर्यमन्वयव्याप्तिर्व्यतिरेकव्याप्तिर्वा स्यात्। पृथिवी इतरभिन्ना गन्धवत्त्वादित्यादौ व्यतिरेकव्याप्तिघटितमेव ज्ञापकत्वमर्थः। अतएव सूत्रे—उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः। तथा वैधर्म्यादित्युक्तमिति द्रष्टव्यम्।

**अन्वयतो व्यतिरेकत उत वा व्याप्त्येकबोधमुद्दिश्य ।**
**दृष्टान्तस्योक्तिः स्यान्न्यायान्तर्भूरुदाहरणम् ॥ १६ ॥**

अन्वय व्याप्ति या व्यतिरेक व्याप्ति के ज्ञान के अनुरूप जो दृष्टान्त कहते हैं वही न्यायान्तःपाती उदाहरण होता है।

अन्वयव्याप्तिव्यतिरेकव्याप्त्यन्यतरमात्रबोधमुद्दिश्य या दृष्टान्तस्योक्तिः सा न्यायन्तर्भून्यायान्तर्गता उदाहरणं भवति । उपनये व्याप्यस्य पक्षवृत्तित्व-पर्यन्तं विवक्षितमिति मात्रपदेन तद्व्युदासः । धूमादित्यादिहेतुप्रयोगोऽपि व्याप्तिमल्लिङ्गबोधनोद्देश्यको न तु व्याप्तिमात्रबोधोद्देश्यकः । यद्यप्युदाहरणे साध्यहेतोरस्ति प्रयोगस्तथापि तयोर्व्याप्तिप्रदर्शनमेवोद्देश्यम् । साध्यहेतु-निर्देशस्य प्रतिज्ञाहेत्वोर्गतत्वात् । उद्देश्यता च विषयताविशेषः । तत्र क्वचिद् यो यो धूमवान् स स वह्निमानित्येतावन्मात्रं प्रयुज्यते । क्वचित्तु यथा महान-समित्यधिकम् । क्वचिच्च यत्र-यत्र धूमस्तत्र वह्निरिति । तत्राप्युद्देश्यं समान-मेव । यन्नैवं तन्नैवमिति व्यतिरेकस्थले । वीप्सापि सन्देहनिवृत्त्यर्थमेव । अत एव व्यतिरेकस्थले प्रायो वीप्सा न दृश्यते । वस्तुतस्तु यथा महानसमित्यादि प्रयोक्तव्यमेव । न्यायप्रयोगस्याऽसन्दिग्धस्पष्टप्रतिपत्त्यर्थत्वात् । अन्यथो-चितानुपूर्वीकत्वादिस्वीकारो विफल एव स्यात् । द्वित्राद्यवयववादिविजयश्च स्यात् । तथा च दृष्टान्तस्य महानसादेरुक्तिरित्येतावत्पर्यन्तमर्थः । न तु व्याप्ति-बोधनमात्रम् । प्रत्युत लोके पर्वतो वह्निमान् धूमाद् यथा महानसमित्येव बहुतरं प्रयुज्यते । न तु यो यो धूमवानित्यादिरपि । परन्त्वत्राप्युद्देश्यत्वं व्याप्तिबोधस्यैव ॥ १६ ॥

**यत्सापेक्षं साध्यव्याप्याश्रयपक्षबोधकं वाक्यम् ।**
**उपनयनं तत्तु तथा न तथेति च सूत्रकृत् प्राह ॥ १७ ॥**

उदाहरणसापेक्ष साध्य व्याप्ति से विशिष्ट पक्षका बोध करने वाले वाक्य को उपनय कहते हैं । अन्वय स्थल में 'और वैसा ही यह है' एवं व्यतिरेक स्थल में 'यह वैसा नहीं है'—ऐसा उपनवाक्य का स्वरूप सूत्रकार ने बताया है ॥१७॥

उदाहरणापेक्षं साध्यव्याप्तिविशिष्टपक्षवैशिष्ट्यावगाहिबोधजनकं न्यायान्तर्गतं वाक्यमुपनयः । तथा चायमिति तदाकारः । वह्निव्याप्यधूमवाँ-श्चायमित्याकारमतेऽपि चकारः पूर्वापेक्षत्वबोधनार्थः । अन्वयस्थले तथा चायमिति व्यतिरेकस्थले न तथायमिति च सूत्रकारेण भेदनिर्देशः कृतः ।

**हेतूकृत्योपनयं पक्षे साध्यप्रदर्शनं वचनम् ।**
**निगमनमाहुर्बाधप्रतिपक्षोत्थानभीहननम् ॥ १८ ॥**

उपनयको हेतु बनाकर पक्ष में साध्य को दिखाने वाले वाक्य को निगमन कहते हैं । बाध और सत्प्रतिपक्ष की आशंका को निगमन निवृत्त कर देता है ।

उपनयं हेतूकृत्य पक्षे साध्यप्रदर्शकं न्यायवचनं निगमनम्। किमर्थं निगमनम् ? तत्राह—बाधप्रतिपक्षोत्थानभयहननमिति। तस्मात्तथेति तदाकारः। तस्मात्—वह्निव्याप्यधूमवत्त्वाच्चेत्यर्थः। न तु धूमादित्येव। अत एव पूर्वं साध्यतयोक्तस्य समर्थहेतुसम्बन्धेन पुनरुत्कीर्तनादित्यत्र समर्थत्वविशेषणं मणिकृतामुपपद्यते। सामर्थ्यं साध्यव्याप्तिवैशिष्ट्यमेव ॥ १८ ॥

**अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ( १.१.४० )**

**आतत्त्वपरिज्ञानं क्रियते हेतूपपादनं येन।**
**स भवत्यूहस्तर्कः क्वचित्प्रमा साऽप्रमा क्वचन ॥ १९ ॥**

तत्त्वनिश्चय होने तक नाना प्रकार से जो हेतु का आवश्यक उपपादन करते हैं उसे ऊह या तर्क कहते हैं। वह कभी प्रमा और कभी अप्रमा होता है।

तर्कं तक्षयति—आतत्त्वेति। अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क इति सूत्रम्। अस्यार्थः—अविज्ञातं विशेषेणाज्ञातं, सामान्यतो ज्ञातमपि विशेषज्ञानविरहाच्छङ्कितमित्यर्थः। तादृशं तत्त्वं यस्मिंस्तत्रार्थे कारणस्यानुमितिहेतोरुपपत्तित ऊह उपपादनमिति यावत्। स तर्कः। तदवधिमाह—तत्त्वज्ञानार्थमिति। एतेन शङ्किते तर्को भवति न सर्वत्र सः। स्वव्याघातादिना शङ्कानिवृत्त्या यत्र तत्त्वज्ञानं तत्र तर्कनिवृत्तिरित्यनवस्था परिहृता। हेतूपपादनमिति लक्षणम्। एतदेव संक्षिप्याह—आतत्त्वेति। परितो ज्ञानं परिज्ञानं न तु सामान्यज्ञानमेव। तत्त्वरिज्ञानं मर्यादीकृत्येत्यनवस्थापरिहारः। तत्त्वपरिज्ञानं चार्थात् फलमित्युक्तम्। येनोहेन हेतूपपादनं क्रियते स तर्कः। तर्कस्याप्रमात्वं बहव इच्छन्ति। परं तु मम तु कर्तृत्वेन कार्यत्वेन कार्यकारणभावस्तर्क इत्यादिकमीश्वरसिद्धयादौ वदद्भिः स्वयमेवाप्रमात्वनियमो विघटितः। न हि कर्तृत्वेन कार्यत्वेन कार्यकारणभावोऽप्रमाविषयः। हेतोरुपपादनं येनापि भवति स तर्कः। क्वचित् स यदि वह्निर्न स्याद् धूमोपि न स्याद्, धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादित्यादिरप्रमात्मकः। लाघवोपन्यासोऽपि तर्क एव। हेतूपपादनमित्यत्र हेतुत्वं साध्यव्याप्तिः ॥ १९ ॥

**तर्काः प्रथमोपस्थिति-विनिगमनाविरह-लाघवो-त्सर्गाः।**
**व्यवहारस्तत्र यथा यस्तर्केणानुसन्धत्ते ॥ २० ॥**

प्रथमोपस्थिति, विनिगमनाविरह, लाघव, उत्सर्ग आदि तर्क हैं क्योंकि इनके लिए भी तर्क शब्द व्यवहार होता है; जैसे इस वाक्य में 'जो तर्क से अनुसन्धान करता है वह धर्म को समझता है'।

कतिचनातिरिक्तांस्तर्कान् परिगणयति—तर्का इति। प्रथमोपस्थित्या विनिगमनाविरहेण लाघवेनौत्सर्गिकतया चार्थसिद्धिः क्रियतेऽतस्तेऽपि तर्का एव। तथा च व्यवहारः—"यस्तर्कणानुसन्धत्ते स धर्मं वेद" इति। न हि तत्र व्याप्यारोपप्रयुक्तव्यापकारोपेणानुसन्धत्त इत्यर्थः। मीमांसाकारोक्तलाघव-गौरवादेरेव तत्र तर्कपदार्थत्वात्। यत्त्वनुमानं तर्कपदार्थ इति। भवतु सोऽपि तर्कपदार्थः। वैशेषिकादीनां तार्किकत्वेन व्यवहारदर्शनात्। तथाप्यनुमानेन योऽनुसन्धत्ते स धर्मं वेदेति तु न स्मृत्यर्थः प्रतीयते। एवमुपक्रमोपसंहारा-संजातविरोधादिः सर्वोऽपि प्रमाणानुग्राहकस्तर्क एव। अन्यथा तेषां प्रमाणेष्व-नन्तर्भावात्तर्कानन्तर्भावाच्च प्रमाणानुग्रहकत्वाच्च प्रमेयान्तरत्वं वक्तव्यम्। तत्र तर्कस्याप्यन्तर्भावात्तर्कपृथक्करणं वृथा स्यादिति घट्टकुटीप्रभातवृत्तान्तः स्यात् ॥ २० ॥

**इत्थं पुनः प्रमाणा-नुग्राहकमूहलक्षणं सकलम्।**
**तर्कः प्रमाणभिन्नं मीमांसादौ कृतं बहुधा ॥ २१ ॥**

इसी प्रकार उपक्रम-उपसंहार, असंजातविरोध आदि प्रमाण के उपोद्बलक जो ऊह मीमांसाप्रसिद्ध हैं, उन्हें तर्क ही समझना चाहिये।

तदेतदाह—इत्थमिति। तथा च सूत्रे कारणपदं प्रमाणसामान्यपरं न तु लिङ्गपरमेव। उपपत्तिपदमनुग्रहार्थकम्। इत्थं च वादजल्पादौ पञ्चावय-वातिरिक्तबहुतरशब्दप्रयोगा ये दृश्यन्ते ते तर्कान्तर्गतत्वेन सर्वैः प्रतिपाद-नीया इति भ्रमरूप एव तर्क इति प्रवादो निर्युक्तिकत्वादश्रद्धेयः ॥ २१ ॥

**विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः (१.१.४१)**

**कृत्वा विप्रतिपत्तिं पक्षप्रतिपक्षयोः परिग्रहतः।**
**अर्थावधारणं यत्तर्केण स निर्णयः कथितः ॥ २२ ॥**

संशय उठाकर उस पर पक्ष व प्रतिपक्ष का मत बताने के बाद तर्क द्वारा जो निर्धारण किया जाता है उसे निर्णय कहते हैं।

निर्णयं निरूपयति—कृत्वेति। विमृश्यपक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति सूत्रम्। तस्यावतरणभाष्यम्—अस्मिंश्च तर्कविषय इति। तथा

च तर्कप्रयुक्तनिर्णय एवात्र लिलक्षयिषित इति गम्यते। तथा च प्रत्यक्षादिनिर्णयस्थले विमर्शादिविरहादलक्षणमिदमिति वदन्तः परास्ताः। बुद्धिनिरूपणेनैव प्रात्यक्षिकनिर्णयादेर्गतार्थत्वादिह च विचाराङ्गभूतनिर्णयस्यैव विचारणीयत्वात्। वादे शास्त्रे च विमर्शवर्जमिति भाष्यम्। तत्र वादो नाम वृद्धगुरोरुपदेशः। शास्त्रं वेदः। अन्यत्र तु स्वयमेव सूत्रकारेण तत्र तत्र संशयप्रदर्शनाद् विप्रतिपत्तिरावश्यकी। मीमांसासु च विशयः प्रागेव दर्शितः। तथा च भगवद्गीतासु—"श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चले"ति। तत्र वादस्थले शिष्यः स्वयमेव शब्दो नित्यो न वेति मे संशय इति विप्रतिपत्तिमुत्थापयति। शास्त्रे च शास्त्रकृतः। यद्वा वादे शास्त्रे च विप्रतिपत्तिनियमो नास्तीत्येवंपरं भाष्यम्। अतएव क्वचित्संशयमप्रदर्श्यैव विचारः सूत्रकारेण प्रवर्तितः। ततः पक्षप्रतिपक्षौ परिगृह्येते प्रश्नोत्तरकृद्भ्याम्। एतच्च वादादावपि तुल्यम्। शास्त्रकारैरुत्थाप्यापि पूर्वपक्षं तन्निराकरणदर्शनात्। न ह्यन्यथा विचारत्वमेव घटते। पश्चात्संभाविताप्रामाण्यबुद्ध्यादेरन्यथा निरसितुमशक्यत्वात्। एवं च सर्वविधसंशयपूर्वपक्षनिराकरणे सति यदवशिष्यते तदवधारणं निर्णय इति ॥ २२ ॥

**तिस्रः कथा भवन्ति वादो जल्पो वितण्डा च ( भाष्यम् ) ( १.२.१ )**

**न्यायोपेतः साधनबाधनयुक्तः प्रमाणतर्काभ्याम्।**
**सिद्धान्तपरः पक्षप्रतिपक्षपरिग्रहस्तु कथा ॥ २३ ॥**

पाँच अवयवों से युक्त, प्रमाण और तर्क के द्वारा खण्डन व समर्थन पूर्वक सिद्धान्तानुकूल पक्ष-प्रतिपक्ष का स्वीकरण कथा कहाता है।

पञ्चावयवोपन्नः प्रमाणतर्काभ्यां स्वपक्षस्थापनपरपक्षबाधनयुक्तः सिद्धान्तकूलः पक्षप्रतिपक्षपरिग्रहः कथेति वादजल्पवितण्डानां सामान्यलक्षणम् ॥ २३ ॥

**तत्त्वज्ञानमभीप्स्वोस्तद्दाढर्यं वोभयोः स वादः स्यात्।**
**विजिगीषुकथा जल्पो बाधो यत्र च्छलाद्यैश्च ॥ २४ ॥**

तत्त्व जानने की इच्छा से या तत्त्वज्ञान को दृढ करने की इच्छा से जब वादी-प्रतिवादी पूर्वोक्त कथा करते हैं तब उसे वाद कहते हैं। प्रतिपक्षी को जीतने की इच्छा से की कथा जल्प है। जल्प में छल आदि द्वारा भी प्रतिवादी का खण्डन किया जाता है।

वादं लक्षयति—तत्त्वज्ञानमिति। तत्त्वज्ञानं तद्दाढ्र्यं वा समभिलाष्यतोरुभयोरपि वादिप्रतिवादिनोः पूर्वोक्तसकललक्षणः केवलाभ्यां प्रमाणतर्काभ्यां साधनबाधने, न तु च्छलादिभिर्यत्र स वाद इत्युच्यते। जल्पं लक्षयति—विजिगीष्विति। न्यायोपेतत्वादेस्तुल्यत्वे सत्यत्र विशेषमाह—बाधो यत्र च्छलाद्यैश्चेति। आद्यपदेन तदुत्तरजातिनिग्रहस्थानयोः परिग्रहः। यत्र च्छलजातिनिग्रहस्थानैरपि बाधः स्यादिति। ततो वादे तद्राहित्यं सूचितम् ॥ २४ ॥

**प्रतिपक्षस्थापनया रहिता तु कथा भवेद्वितण्डाख्या ।**
**प्रतिषेधः क्वचन निजः पक्षो वैतण्डिकस्य स्यात् ॥ २५ ॥**

किसी भी पक्ष की स्थापना जिसमें न हों वह वितंडा है। कहीं वैतण्डिक का प्रतिषेध ही अपना पक्ष हो सकता है।

वितण्डां लक्षयति—प्रतिपक्षेति। वादी स्थापनावाक्यं प्रयुङ्क्ते। वैतण्डिकस्य स्थापनीयविरहात् स सदा प्रतिपक्ष्येवन भवतीत्याशयेनात्र स्वपक्षस्थापनाराहित्यं लक्षणे न निवेशितम्। क्वचित्प्रतिषेध एव वैतण्डिकस्य संभवतीति प्रतिरक्षरहितत्वमात्रमपि नोक्तम्। यथा वैनाशिकानाम्। तत्राप्येकतरस्य वाक्यं न्यायोपेतं भवतीति कथालक्षणसत्त्वं बोध्यम्। उभयोस्तथात्वे कलहमात्रं भवेन्न तु कथा। वैतण्डिकस्तु प्रतिषेधातिरिक्तस्वीयपक्षाभावादेव न प्रतिपक्षस्थापनां करोति। क्वचनेति। कस्तव पक्ष इत्यनुयुक्तेनानुत्तरणेऽप्रतिभा। नास्ति पक्ष इति कथने पक्षप्रतिपक्षपरिग्रहात्मककथात्वविघात इति प्रतिषेध एव मम पक्ष इति तदा तेन वक्तव्यमित्याशयः। न चैवं वैनाशिकादेरेव वैतण्डिकत्वं स्यान्न त्वन्यस्येति वाच्यम्। आभिमानिकतया संभवात् ॥ २५ ॥

**सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः (१.२.४८)**

**अनुमां तत्करणं वा प्रतिबध्नीयाद् यदर्थकं ज्ञानम् ।**
**स भवेद्धेत्वाभासः सव्यभिचारादिरस्य भिदा ॥ २६ ॥**

यद्विषयक ज्ञान अनुमिति या उसके करण का प्रतिबन्धक हो, वह हेत्वाभास होता है। सव्यभिचार आदि उसके भेद प्रसिद्ध हैं ॥ २६ ॥

हेत्वाभासं निरूपयति—अनुमामिति। अर्थपदेन यथार्थवस्तुलाभाद् यद्रूपविशिष्टं ज्ञानमनुमितितत्करणान्यतरप्रतिबन्धकं तद्रूपवत्त्वम् प्रकृ-

तानुमितितत्करणान्यतरप्रतिबन्धकतावच्छेदकविषयतावच्छेदकरूपवत्त्वात्मकं हेत्वाभाससामान्यलक्षणम्। ह्रदो वह्न्यभाववानिति ज्ञानं ह्रदो वह्निमानित्यनुमितिविरोधि। तथा वह्निर्धूमव्यभिचारीति ज्ञानं वह्निर्धूमव्याप्य इत्यनुमितिकरणपरामर्शविरोधि इत्यादिरीत्या वह्न्यभाववद्ध्रदत्व धूमव्यभिचारिवह्नित्वादिकं तादृशरूपमिति तद्वत्त्वं यथाकथंचित्सम्बन्धेन हेतावादाय सर्वत्र लक्षणसमन्वयः। पर्वतो वह्न्यभाववानिति भ्रममादाय धूमस्य हेत्वाभासत्वं वह्न्यभाववत्पर्वतस्यार्थत्वविरहान्नास्ति। प्रमेयवह्न्यभाववान् ह्रद, इति जलं वह्न्यभावव्याप्यं जलवांश्च ह्रद इति च ज्ञानमादाय प्रमेयवह्न्यभाववद्ध्रद-वह्न्यभावव्याप्यजलवद्वृत्तिजलवद्ध्रह्रदादावतिव्याप्ति - वारणाय विशिष्टान्तराघटितत्व विशिष्टद्वयाघटितत्वं च निवेश्यम्। अस्य हेत्वाभासस्य भिदा सव्यभिचारादिः। सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धवाधिताः पञ्च ॥ २६ ॥

**सव्यभिचारः संशयकोटयोर्यः स्यादुपस्थितेर्हेतुः।**
**साधारणादिदोषत्रितयान्यतमं तमाहुरिमम् ॥ २७ ॥**

साध्य में संशय को उत्पन्न करने वाली कोटियों को उपस्थित करने वाला हेतु सव्यभिचार कहा जाता है। इसके तीन भेद हैं—(१) साधारण, (२) असाधारण, (३) अनुपसंहारी।

सव्यभिचारं लक्षयति—सव्यभिचार इति। साध्यसंशयजनककोटिद्वयोपस्थापकधर्मवत्त्वं सव्यभिचारत्वम्। उक्तं च साधारणासाधारणधर्मोपपत्तेः संशय इति। धूमतदभावोभयसहचरितो वह्निरिति ज्ञानेन धूमसंशयो भवति। एवं नित्यत्ववद्गगनादेर्नित्यत्वाभाववद्घटादेश्च व्यावृत्तशब्दत्वज्ञानाद् शब्दो नित्यो न वेति संशयः। किन्तु नित्यत्वाभाववति शब्दे शब्दत्वमस्ति। तथापि शब्दे नित्यत्वाभावो न प्रमितोऽव्यापीति न संशयं प्रतिरोद्धुं क्षमते। ततश्च सपक्षविपक्षव्यावृत्तत्वं फलितम्। तच्च दशाविशेषे एव संभवतीति अनित्यदोषोऽयम्। ननु संशयसूत्रेऽनुपसंहारिणः संशयहेतुत्वं नोक्तमिति चेन्न। सर्वं वाच्यं न वेति संशयो भवति। तत्र वाच्यत्ववद्घटादिवृत्तित्वं ज्ञातं प्रमेयत्वस्य। वाच्यत्वाभावः कुत्रचित् स्यात्तत्रापि प्रमेयत्वं स्यादिति सम्भावितवाच्यत्वाभाववद्वृत्तित्वेन साधारणतुल्यत्वात्ततोऽपि संशयो भवेदेव। अथवा प्रमेयत्वे व्यभिचारसंशयाद् व्यापकसंशयः। सर्वथाप्युपलब्ध्याद्यव्यवस्थायामन्तर्गतः। अयमपि दशाविशेषे एव दोषः। सव्यभि-

चारविभागव्याजेन साधारणाद्यन्यतमत्वं निर्दोषलक्षणमाह—साधारणादीति ॥ २७ ॥

**साधारणः स साध्यवदन्यस्मिन् यस्तु वर्तते हेतुः ।**
**साध्यैकानधिकरणोऽसाधारण ईरितः प्राज्ञैः ॥ २८ ॥**

साध्य के अनधिकरण में भी जो हेतु रह जाये, वह साधारण तथा साध्य का असमानाधिकरण हेतु असाधारण विचारकों ने निश्चित किया है।

साध्यवदन्यवृत्तित्वं हेतोः साधारणत्वम् । साध्यवदन्याऽवृत्तित्वलक्षण व्याप्तिज्ञानविरोधि तत् । हेतुसमानाधिकरणात्यन्ताभावाऽप्रतियोगित्व-घटितव्याप्तिमते तादृशभावप्रतियोगित्वं बोध्यम् । साध्यासमानाधिकरणत्व-मसाधारणत्वं नव्यैरुक्तम् । व्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिप्रतिरोधि तत् ॥ २८ ॥

**अत्र सपक्षविपक्षावुदितौ निर्णीतसाध्यतदभावौ ।**
**तदुभयतो व्यावृत्तं जगदुरसाधारणं केचित् ॥ २९ ॥**

साध्य जहाँ निश्चितरूप से रहे वह सपक्ष, तथा जहाँ निश्चय ही साध्य न रहे वह विपक्ष होता है । जो हेतु सपक्ष व विपक्ष में न रहे (केवल पक्ष में हो) उसे कुछ आचार्य असाधारण कहते हैं ।

निश्चितसाध्यकः सपक्षः । निश्चितसाध्याभावको विपक्षः । तदुभयतो व्यावृत्तं हेतुं केचिदसाधारणं जगदुः ॥ २९ ॥

**योऽभावाऽप्रतियोगी हेत्वादिः सोऽयमनुपसंहारी ।**
**साध्यव्यापकविरहप्रतियोगी स्याद्विरुद्धस्तु ॥ ३० ॥**

वह हेतु जिसका कहीं भी अभाव न हो अनुपसंहारी कहाता है । जो हेतु साध्य के व्यापक अभाव का प्रतियोगी हो उसे विरुद्ध कहते हैं ।

केवलान्वयिहेत्वादिरनुपसंहारी । सर्वं शून्यं मेयत्वादित्यादौ हेतोरत्य-न्ताभावाऽप्रतियोगित्वात् साध्याभावव्यापकीभूताभावप्रतियोगित्वलक्षण-व्यतिरेकव्याप्तिग्रहप्रतिबन्धः । न च केवलान्वय्यनुमानस्वीकाराद् हेतु-सामानाधिकरणाभावाऽप्रतियोगिसाध्यसामानाधिकरण्येनानुमितिः स्यादिति वाच्यम् । तद्घटकसाध्यसामानाधिकरण्यग्रहणविरहात् । न च पक्षैकदेशे साध्यज्ञानमस्ति । तथा सति केवलव्यतिरेक्युच्छेदापत्तेः । पृथिवीतरेभ्यो

भिद्यते। गन्धवत्त्वादित्यत्र घटादिदृष्टान्तसम्भवाद्। किं च शून्यत्वं कुत्र गृहीतम्। न ह्यसत्त्वाधिकरणं किंचित्प्रमितमुभयवादिसंमतं वा। तथा च केवलव्यतिरेक्येवावशिष्यते। तत्प्रतिबन्धश्चात्यन्ताभावाऽप्रतियोगित्वज्ञानाव स्यादेव। विरुद्धं लक्षयति—साध्येति। साध्यव्यापकीभूताभावप्रतियोगी हेतुर्विरुद्धः। वह्निमान् जलादित्यादौ साध्याभावस्य व्यतिरेकव्याप्तिः साध्यव्यापकीभूताभावप्रतियोगित्वमिति। साध्याभावबोधसामग्रीविधया विरोधस्य प्रतिबन्धकत्वम् ॥ ३० ॥

**सत्प्रतिपक्षः साध्याभावव्याप्यो यदीतरो हेतुः।**
**सोऽयं प्रकरणसम इति जगदुः शङ्काऽनिरासित्वात् ॥ ३१ ॥**

साध्याभावव्याप्य हेत्वन्तर प्रकरणसम या सत्प्रतिपक्ष कहलाता है। उसे प्रकरणसम इसलिये कहते हैं क्योंकि इसके कारण जिस संशयावस्था में प्रकरणारंभ हुआ था वैसी ही अवस्था बनी रहती है ॥३१॥

साध्याभावव्याप्यं हेत्वन्तरं सत्प्रतिपक्षः साध्याभावबोधनसामग्रीत्वेन प्रतिबन्धकः। सोऽयं प्रकरणसम इत्यप्युच्यते। कुतः? प्रकरणं प्रक्रमः। साध्यसंशयेन ह्यनुमानं प्रक्रम्यते विचारश्च। तत्तुल्यमेवाधुनापीति ॥ ३१ ॥

**सव्यभिचारादन्या भवति परामर्शबाधिकाऽसिद्धिः।**
**सा चाश्रयाद्यसिद्धत्रय्यन्यतमा हि साध्यसमा ॥ ३२ ॥**

सव्यभिचार से भिन्न परामर्शबाधिका असिद्धि होती हैं। उसे आश्रयासिद्धि आदि में से अन्यतम'—ऐसे भी कह सकते हैं। उसी का साध्यसम भी नाम हैं।

सव्यभिचारातिरिक्ता परामर्शबाधिकाऽसिद्धिरुच्यते। सव्यभिचारस्य साध्यसंशयजनकत्वान्मुख्यकरणव्याप्तिज्ञानप्रतिबन्धकत्वाच्च पृथगुक्तिः। आश्रयासिद्धिस्वरूपासिद्धिव्याप्यत्वासिद्ध्यन्यतमत्वमित्यपि लक्षणम्। साध्यवत् साधनीयत्वादसिद्धत्वात् साध्यसम इत्युच्यते। अयं पश्चादप्यसिद्धर्मिति साध्यसमत्वमात्रं न तु साध्यत्वम् ॥ ३२ ॥

**पक्षादौ ताद्धर्म्यं यदि न भवेत्तर्हि साऽऽश्रयासिद्धिः।**
**पक्षे तथा स्वरूपासिद्धिर्हेतोरभावात् स्यात् ॥ ३३ ॥**

पक्ष में पक्षतावच्छेदक न हो तो आश्रयासिद्‌धि कही जाती है। पक्ष में हेतु न हो तो स्वरूपा सिद्धि कही जाती है ॥३३॥

पक्षे ताद्धर्म्यं पक्षतावच्छेदकं यदि नास्ति तदा काञ्चनमयपर्वतो वह्निमानित्यादावाश्रयासिद्धिः। साध्यहेत्वोरपि ताद्धर्म्याभावे आश्रयासिद्धिरेव। पक्षे हेतोरभावे पर्वतो वह्निमान् जलाद्, उत्पत्तिकालावच्छिन्नघटः पृथिवी गन्धवत्त्वादित्यादौ स्वरूपासिद्धिः ॥ ३३ ॥

**सोपाधिकं तु हेतुं व्याप्यत्वासिद्धिमूचिरे सुधियः ।**
**प्राहुरुपाधिं साध्यव्यापकमव्यापकं हेतोः ॥ ३४ ॥**

सोपाधिक हेतु को विद्वानों ने व्याप्यत्वासिद्धि बताया है। जो साध्यव्यापक किन्तु साधनाव्यापक हो उसे उपाधि कहते हैं ॥३४॥

सोपाधिको हेतुर्व्याप्यत्वासिद्धः। साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः ॥ ३४ ॥

**व्यभिचारव्याप्यत्वमुपाधेर्व्यभिचारवत्त्वसम्बन्धात् ।**
**व्याप्तिप्रतिबन्धकता ताद्रूप्येणैव तदुपाधेः ॥ ३५ ॥**

व्यभिचारवत्त्वसम्बन्ध से व्यभिचारव्याप्यत्व यह उपाधि है। इसी प्रकार व्यभिचारव्याप्यवत्ताज्ञान से उपाधि व्याप्ति को प्रतिबद्ध करती है ॥३५॥

ननु कथं सोपाधिकहेतोरनुमितितत्कारणान्यतरप्रतिबन्धकता ग्राह्याभावानवगाहित्वादत आह—व्यभिचारेति। यथा साध्यस्य स्वभाववत्त्वज्ञानं स्वाभावव्याप्यवत्त्वज्ञानं च प्रतिबन्धकं तथा व्याप्तेः व्यभिचारज्ञानं व्यभिचारव्याप्यवत्ताज्ञानं च प्रतिबन्धकम्। व्यभिचारव्याप्यो ह्युपाधिः। तथा च प्रयुज्यते—वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारित्वादिति। तत्र धूमव्यभिचारव्याप्यत्वेनार्द्रेन्धनसंयोगो व्यभिचारवत्त्वसम्बन्धेन वह्नौ द्रष्टव्यः। तेनैव रूपेण प्रतिबन्धकत्वं बोध्यम्। संक्षेपात्तु सोपाधिकत्वेन व्याप्तिविरोधित्वमुच्यते शास्त्रकारैः। यद्यप्येवं हेत्वभावव्याप्यवत्त्वादेरपि हेत्वाभासत्वं युक्तम्। तथापि तत्सर्वं तत्तद्दोषेष्वसिद्ध्यादिष्वन्तर्भवति। साध्यभावव्याप्यलक्षणसत्प्रतिपक्षं साध्यव्याप्त्यभावव्याप्यलक्षणं सोपाधित्वं च मुख्यत्वात्पृथगभिहितमिति ध्येयम् ॥ ३५ ॥

**साध्याभावविशिष्टः पक्षश्चेद् बाध एष दोषः स्यात् ।**
**साध्याऽकलनादाहुः कालातीतं तमेव बुधाः ॥ ३६ ॥**

पक्ष यदि साध्याभावविशिष्ट हो तो बाध दोष होता है। इसे ही कालातीत भी कहते हैं। क्योंकि जहाँ यह दोष होता है वहाँ पक्ष द्वारा साध्य का संग्रह नहीं किया जा पाता ॥३६॥

कालातीतमाह—साध्येति। साध्यभावविशिष्टः पक्षो बाधः। इममेव कालातीतमाहुः। कथम् ? पक्षेण साध्यस्याऽकलनादसंग्रहात्। कालः कलयतामहमिति कलनकर्तुः कालत्वं प्रसिद्धम्। तदतीतत्वं च कलनीयात्यन्ताभावात् कलनीयध्वंसात् कलनीयप्रागभावाच्च। तथा चोत्पत्तिकालीनघटो गन्धवान् पृथिवीत्वादित्यादावसंकरितोदाहरणसंग्रहः॥ ३६॥

**वचनविघातोऽर्थविकल्पोपपत्त्या च्छलम् (१.२.१०)**

**तात्पर्याविषयार्थं वक्तुः परिकल्प्य दूषणं युक्त्या।**
**छलमित्युक्तं तच्च त्रिविधं स्याद्वाक्छलादिभिदा॥ ३७॥**

वक्ता के तात्पर्यार्थ से भिन्न अर्थ की कल्पना कर युक्ति से दोष देना छल है जो वाक्छल आदि भेद से तीन प्रकार का है॥३७॥

कचिच्छलेनाप्युग्रवादी निरोद्धव्य इति विचाराङ्गं छलमपि भवति। ततश्छलं लक्षयति-तात्पर्येति। वक्तुस्तात्पर्याविषयमर्थं परिकल्प्य युक्त्या दुषणं छलम्। यथात्मा कूटस्थ इत्युक्ते न ह्यात्मा कूटे लौहविशेषे तिष्ठतीत्यादि। तच्च च्छलं वाक्छलादिभेदेन त्रिविधम्॥ ३७॥

**शक्यार्थान्तरयुक्तेर्दूषणकथनं तु वाक्छलं प्रोक्तम्।**
**सामान्यच्छलमेवं संभवदर्थे नियतियुक्तेः॥ ३८॥**

तात्पर्य अविषय शक्यार्थ लेकर दूषण बाताना वाक्छल है। कहा तो गया हो संभावित अर्थ को लेकर पर उसे नियमार्थ मानकर दूषण देता हो तो सामान्य छल होता है॥३८॥

वाक्छलमाह—शक्येति। शक्यं पदार्थान्तरं तद्युक्तेर्दूषणकथनं वाक्छलम्। यथा नवीनकम्बलयुक्तार्थशक्त्योक्ते नवकम्बलोऽयं माणवक इति तत्र प्रतिवाद्याह—एकोऽस्य कम्बलः कुतः कम्बला नव निगद्यन्त इति। द्वितीयं सामान्यच्छलमाह–सामान्येति। संभवाभिप्रायेणोक्ते नियमार्थत्वमादाय दूषणं सामान्यच्छलम्। यथाऽयं ब्राह्मणः श्रुतशीलसम्पन्न इत्युक्ते ब्राह्मणोऽपि सन् व्रात्यो न श्रुतशीलसम्पन्न इति। ब्राह्मणत्वसामानाधिकरण्येन संभवदर्थस्य ब्राह्मणत्वाच्छेदेनोक्त्यभिप्रायेण दूषणम्। किं चास्मिन् ब्राह्मणे संभवन्तमर्थमादायोक्ते ब्राह्मणत्वसामान्येनापाद्य दूषणम्॥ ३८॥

**शक्त्या लक्षणया वा प्रोक्ते विपरीतवृत्तिमादाय।**
**वक्तुर्दूषणकथनं जगुरुपचारच्छलं वृद्धाः॥ ३९॥**

वक्ता ने शक्ति या लक्षणा, जिस वृत्ति के अभिप्राय से कहा हो उससे विपरीत वृत्ति को लेकर दोष देना उपचार छल नाम से कथावेत्ता बताते हैं ॥३९॥

उपचारच्छलमाह—शक्त्येति । शक्त्या लक्षणया वा प्रोक्ते विपरीतां वृत्तिमादाय वक्तुर्दूषणकथनमुपचारच्छलम् । यथा नित्योऽहमित्युक्ते तव जन्म देवदत्तादभूदिति कथं नित्य इति । आत्मार्थतया प्रयुक्ते शरीरार्थमादाय दूषणकथनम् । श्वेतो धावतीति अश्वलक्षणया प्रयुक्ते इतः श्वा धावतीति शक्यार्थमादाय कुतोऽत्र श्वा धावतीति ॥ ३९ ॥

**साधर्म्य-वैधर्म्यो-त्कर्षा-ऽपकर्ष-वर्ण्या-ऽवर्ण्य-विकल्प-साध्य-प्राप्त्य-ऽप्राप्ति-प्रसङ्ग-प्रतिदृष्टान्ता-नुत्पत्ति-संशय-प्रकरण-हेत्व-र्थापत्त्य-ऽविशेषो-पपत्त्यु-पलब्ध्य-नुपलब्धि-नित्या-ऽनित्य-कार्यसमाः ।**

**( ५. १.१ )**

**स्वव्याघातनिदानं प्रतिवचनं जातिरुच्यते सा च ।**
**तस्यानल्पविकल्पैः साधर्म्यसमादिभिर्बहुधा ॥ ४० ॥**

स्वयं अपने को काट देने वाले प्रतिवचन को जाति कहते हैं । ऐसा स्वव्याघात ( अपना खुद ही विरोध ) नाना कारणों से सम्भव है । अत: जाति भी साधर्म्यसम आदि विभिन्न प्रकारों से होती है ॥४०॥

जातिं निरूपयति-स्वेति । व्याप्तितर्कशून्ये प्रतिवचने वाद्यपि लब्धावसरस्तथैव प्रयुञ्ज्यादिति स्वव्याघातनिदानं तादृशं प्रतिवचनं जातिरुच्यते । सा च जातिः, तस्य स्वव्याघातादिनिदानत्वस्य, नानाविकल्पैः साधर्म्यसमादिभिर्बहुधा भवति ॥ ४० ॥

**अन्वयदृष्टान्तमुखं सत्प्रतिपक्षानुदेशनमतर्कम् ।**
**साधर्म्यसमा तद्वद्वैधर्म्यसमान्यदृष्टान्तम् ॥ ४१ ॥**

अन्वयदृष्टान्त द्वारा तर्करहित प्रतिपक्ष उपस्थित करना साधर्म्यसमा जाति है । व्यतिरेकदृष्टान्त द्वारा तर्करहित प्रतिपक्ष उपस्थित करना वैधर्म्यसमा जाति है ।

साधर्म्यसमामाह—अन्वयेति । अन्वदृष्टान्तेन तर्कशून्यसत्प्रतिपक्षदेशनं साधर्म्यसमा । यथा शब्दोऽनित्यः कृतकत्वाद् व्यतिरेकेण व्योमवदिति अत्र नित्यः शब्दोऽस्पर्शत्वात् सामान्यवदिति । वैधर्म्यसमामाह—तद्वदिति । अन्यदृष्टान्तं = व्यतिरेकदृष्टान्तम् । तत्रैव नित्यः शब्दो निःस्पर्शत्वाद् यन्नैवं तन्नैवं यथा घट इति । वस्तुतस्त्वेकहेतुकैवेयम् । नित्यः शब्दः कृतकत्वाद्

ध्वंसवदिति व्यतिरेकेण प्रागभाववदिति । द्विहेतुकां तु प्रकरणसमां सत्प्रतिपक्षानुदेशनां वक्ष्यामः ॥ ४१ ॥

**दार्ष्टान्तिकत्वहान्यै तत्रासन्तं स्थितं तु दृष्टान्ते ।**
**धर्मं देशयतीति यदुत्कर्षसमो विकल्पः सः ॥ ४२ ॥**

दार्ष्टान्त का विघटन करने के लिये दार्ष्टान्तिक में न रहने वाले तथा दृष्टान्त में रहने वाले धर्म को उपस्थित करना उत्कर्षसमा जाति है ।

उत्कर्षसमामाह—दार्ष्टान्तिकत्वहान्यै इति । दार्ष्टान्तिकत्वं विघटयितुं तत्र दार्ष्टान्तिकेऽसन्तमविद्यमानं किन्तु दृष्टान्ते घटादौ स्थितं रूपादिकं देशयतीति यत् सा देशना उत्कर्षसमा जातिविकल्पः । यथा शब्दस्य घटसदृशत्वेनानित्यत्वे तेनैव रूपवत्त्वमपि स्यात् । तथा च घटदृष्टान्तेन साध्यं साधयितुं न शक्यमिति भावः । प्रतिकूलतर्कदेशनाभासोऽयम् ॥४२॥

**दृष्टान्तत्वविघटनं चिकीर्षुणा पक्षवर्तिधर्मस्य ।**
**दृष्टान्तेऽतत्स्थस्य हि देशनमपकर्षसममाहुः ॥ ४३ ॥**

दृष्टान्त का विघटन करने की इच्छा वाला जब दृष्टान्तमें न रहने वाले, पर, पक्ष में रहने वाले धर्म को उपस्थित करता है तब अपकर्षसमा जाति कही जाती है ।

अपकर्षसमामाह—दृष्टान्तत्वेति । घटसमो यदि शब्दस्तदा शब्दसमो घट इति शब्दस्य नीरूपत्वाद्घटोऽपि नीरूपः स्यात् । न त्वेवमिति दृष्टान्ताभासोऽयं तवेत्याशयः । हेत्वाभासवद् दृष्टान्ताभासोऽपि निग्रहस्थानं वार्तिककारा आहुः । तथा च दृष्टान्ताभासतानुदेशनमिति । अतत्स्थस्य = दृष्टान्ते घटादावविद्यमानस्य ॥ ४३ ॥

**पक्षसमवर्तिहेतुं साधकयोग्यं वदन्नुदाहरणे ।**
**दृष्टान्तासिद्ध्यर्थिं वर्णयते वर्ण्यसम एष ॥ ४४ ॥**

शब्द को अनित्य सिद्ध करने में घट को दृष्टान्त कैसे बनाते हो; शब्द विभुगुण है जबकि घट विभुगुण नहीं है । इच्छादि भी मनोगुण हैं, विभुगुण नहीं, अतः दृष्टान्त नहीं—यह वर्ण्यसमाजाति है ॥ ४४ ॥

वर्ण्यसमामाह—पक्षेति । पक्षतुल्यवर्तिहेतुना त्वया साधनीयम् । घटो न विभुगुणः । न वा इच्छादिः । तस्य मनोगुणत्वात् । तथा च विसदृशो दृष्टान्त इति दृष्टान्तासिद्ध्यापादनम् । सन्दिग्धसाध्यकस्थो हेतुः साधक इति व्याख्यान्तरमतिस्थवीयस्त्वादुपेक्ष्यते । वर्ण्यः प्रतिपाद्यः पक्षस्तत्समा ॥४४॥

**दृष्टान्ततुल्यपक्षे हेतुः साध्यं प्रसाधयेत्तेन ।**
**यदसिद्धयादेर्देशेनमुक्ता प्राज्ञैरवर्ण्यसमा ।। ४५ ।।**

दृष्टान्त घट द्रव्य है। द्रव्यवृत्तिकृतकत्त्व, शब्द में कैसे ? पक्ष दृष्टान्त से विषम है। ऐसा कहना अवर्ण्यसमा जाति है ।। ४५ ।।

घटः खलु द्रव्यं दृष्टान्तस्तेन गुणस्य शब्दस्यानित्यत्वं दुःसाधम्। द्रव्यवृत्तिकृतकत्वमसिद्धं शब्दे। दृष्टान्तस्यावर्णनीयत्वादप्रतिपादनीयत्वात्तत्साम्येन दोषापादनमवर्ण्यसमा। दृष्टान्तस्य निश्चितसाध्यकत्वात्तादृशे निश्चितसाध्यके पक्षे स्थितो हेतुरेव साधक इति विवरणमतिस्थवीयः।

**कस्यचनापि क्वापि व्यभिचारादिं निदर्श्य हेतौ यत्।**
**साध्यव्यभिचारादेः प्रकल्पनं सा विकल्पसमा ।। ४६ ।।**

किसी का भी कहीं भी व्यभिचार दिखाकर जो हेतु में साध्यव्यभिचार की कल्पना होती है वह विकल्पससा जाति है ।। ४६ ।।

गुरुणि सुवर्णादौ लघुनि तूलादौ विद्यमानमपि कृतकत्वं यथा गुरुत्वादिकं व्यभिचरति तथा नित्यत्वमपि व्यभिचरेद्। यथा प्रमेयत्वमनित्यत्वं व्यभिचरति तथा कृतकत्वमपि व्यभिचरेत् वह्निर्धूमं यदि व्यभिचरेद् धूमो वह्निं कुतो न व्यभिचरेदित्येवं कस्यचन कुत्रापि व्यभिचारादिम्। आदिना विरोधादिकं निदर्श्य हेतौ यत्साध्यव्यभिचारादेः प्रदर्शनं सा विकल्पसमा। व्यभिचारादिदेशनाभासः ।। ४६ ।।

**दृष्टान्तोऽपि च साध्यः पक्षादिश्चेति सर्वसाध्यत्वात्।**
**यदसिद्धयाद्युद्भावनमेषा व्याख्यायि साध्यसमा ।। ४७ ।।**

दृष्टान्त, पक्ष आदि सभी सिद्धिसापेक्ष हैं, अन्यथा दृष्टान्तासिद्ध, पक्षासिद्धि आदि दोष होंगे—यह साध्यसमा जाति बतायी है ।। ४७ ।।

साध्यसमामाह—दृष्टान्त इति। घटोऽनित्य इत्यसिद्धं तत्साध्यताम्। प्रथमं शब्दोऽस्तीति साध्यताम्। तदसाधनाद्दृष्टान्तासिद्धिः पक्षासिद्धिरिति।

**अविशेषान्मिलितवतोः साधकता दुरवधारणैकस्य ।**
**अतथात्वेऽसाधकता प्राप्तिसमाऽप्राप्तिसमयुग्मम् ।। ४८ ।।**

'अनित्यत्त्व और कृतकत्त्व में कौन किसका साधक है ? यह सव्यापसव्य विषाणवत् हैं'—ऐसा कहना प्राप्तिसमा है। 'वह्निमान् धूमात्—यहाँ वह्नि धूम के विना भी सिद्ध हैं'—ऐसा कहना अप्राप्तिसमा है ।। ४८ ।।

प्राप्तिसमामप्राप्तिसमां चाह—अविशेषादिति। साध्याधिकरणवृत्तित्वं हेतोर्ज्ञातं चेद्धेत्वधिकरणवृत्तित्वं साध्यस्यापि ज्ञातमिति कः कस्य साधकः इति प्राप्तिसमा। यदि साध्याधिकरणवृत्तित्वं न ज्ञातं तदाऽसाधक एव हेतुरित्यप्राप्तिसमा। सिद्धसाधनदेशनाभासः अपार्थकत्वदेशनाभासश्च। ज्ञापकत्वविरहेण पञ्चम्यनुपपत्तेः। व्याख्यानान्तरमन्यत्र द्रष्टव्यम् ॥ ४८ ॥

**दृष्टान्ते साधकतानपदिष्टेतोरणं प्रसङ्गसमा।**
**प्रतिदृष्टान्तादतथा सा प्रतिदृष्टान्तसमजातिः ॥ ४९ ॥**

घटवत् अनित्य कैसे ? क्या ब्राह्मण गोवत् होने से पशु है ? ऐसा कथन प्रसंगसमा है। गगन दृष्टान्त से नित्य क्यों नहीं ? ऐसा कथन प्रतिदृष्टान्तसमा जाति है ॥ ४९ ॥

प्रसङ्गसमां प्रतिदृष्टान्तसमां चाह—दृष्टान्त इति। घटदृष्टान्तः कथं शब्दानित्यतां साधयतीति नोक्तम्। अन्यथा ब्राह्मणः पशुः (प्राणित्वाद्) गोवदित्यपि स्यात्। नित्यः शब्दः (पदार्थत्वाद्) गगनवदित्येव किं न स्यादित्युभयोदाहरणम्। प्रथमेऽपार्थकाभासः। द्वितीये सत्प्रतिपक्षाभासः। हेत्वकथने तु बाधाभासो द्रष्टव्यः। दृष्टान्तसाधनाय दृष्टान्तान्तरमित्यनवस्थाभासो वा प्रथमे ॥ ४९ ॥

**ऐकान्तिकबोधकतां हेतोर्बुद्ध्वा निषिध्यते यदिदम्।**
**हेतूत्पत्तेः प्राङ्नो साध्यमनुत्पत्तिसम एषः ॥ ५० ॥**

हेतु ही साध्य का अस्तित्व बोधक है ऐसा समझ कर यह निषेध किया जाता है कि हेतु की उत्पत्ति से पूर्व साध्य की विद्यमानता नहीं होगी अतः बाध है—इसे अनुत्पत्तिसमा कहते हैं ॥ ५० ॥

अनुत्पत्तिसमामाह—ऐकान्तिकेति। धूम एव वह्नेर्ज्ञापकः साधकः। तथा च धूमोत्पत्तेः प्राक् पर्वते वह्निर्न स्यात्। ब्रूते च भवान् कालमनुल्लिख्य पर्वतो वह्निमानिति। ततो बाधदेशनाभासः। यदोत्पन्नो धूमस्तदा वह्निरित्येव तात्पर्यमित्याभासता ॥ ५० ॥

**कोटिद्वयसाधर्म्यात् संशयकथनं तु संशयसमः स्यात्।**
**प्रतिहेतुना निषेधः प्रकरणसममूचिरे लघुना ॥ ५१ ॥**

शब्द में ऐन्द्रियकत्व भी है जो नित्य-अनित्य साधारण है, अतः नित्यत्व सांशयिक है—यह कहना संशयसमा है। कृतकत्व से हम नित्यत्व सिद्धि करते हैं, इस पर तुम्हें क्या कहना है—यह प्रकरणसमा है ॥ ५१ ॥

संशयसमं प्रकरणसमं चाह—कोटीति। ऐन्द्रियकत्वमनित्ये घटे, नित्ये घटत्वे चास्ति। शब्दश्चैन्द्रियक इति संशयो युक्त इति वचनं संशयमा। प्रतिपक्षिणो हेतुः प्रतिहेतुः स्वपक्षं प्रति लघुना तेन साध्यनिषेधः प्रकरणसमः। अनित्यः शब्दः कृतकत्वादित्यत्र मैवं नित्यः शब्दः कृतकत्वादिति। विरोधदेशनाभासः। वस्तुतस्तु साधर्म्यवैधर्म्यसमावेकहेतुकौ। प्रकरणसमस्तु द्विहेतुकः। सत्प्रतिपक्षस्यैव प्रकरणसमसंज्ञाया महर्षिणोक्तेः। अत्यन्तनिर्बलोत्तरत्वे जात्युत्तरत्वम्। यथा नित्यः शब्द उत्पन्नत्वादिति ॥ ५१ ॥

**त्रैकाल्ये हेतुत्वासिद्धेरापादनं त्वहेतुसमः।**
**अर्थापत्तिसमोऽर्थापत्त्याभासादनिष्टस्य ॥ ५२ ॥**

'धूमात्' कहने पर भूत-भावी धूम भी आयेंगे, क्या वे भी इस समय वह्निसाधक हैं? यह अहेतुसमा है। धूम से वह्नि का होना निश्चित हो तो वह्नि से धूम भी निश्चित होना चाहिये—यह अर्थापत्तिसमा है ॥५२॥

अहेतुसमामाह—त्रैकाल्य इति। प्रकृतसाध्यस्य भूते वर्तमाने भाविनि वा काले सतो हेत्वभिमतस्य हेतुत्वं न संभवति। भूतभविष्यतोर्वर्तमानसाध्यासाधकत्वं स्पष्टम्। वर्तमाने यावल्लिङ्गज्ञानेनानुमितिस्तावत्साध्यहेत्वोर्विगमसंभवादहेतुत्वम्। प्रतिकूलतर्कदेशनाभासश्चार्वाकादेः। अर्थापत्त्याभासमुपादायापादानं, शब्दोऽनित्यश्चेद् घटः किं ननित्यः? यदि तथा तदा दृष्टान्तासिद्धिरिति। शब्दभेदात्कर्मभेदे शब्दैक्यात्कर्मैक्यं भवेदिति शावरभाष्यमर्थापत्तिसमासंज्ञजात्युत्तरमिति तन्त्रवार्तिके। यथा च धूमाद् यदि वह्निमान् तदा धूमाभावाद्वह्न्यभाववान् स्यादिति ॥ ५२ ॥

**दृष्टान्तपक्षयोश्चेदविशेषोऽशेषतोऽविशेषसमः।**
**उपपत्तिसमः स भवेद् यदुभयहेतूपपत्तिवचः ॥ ५३ ॥**

दृष्टान्त और पक्ष को सर्वथा समान दिखाने का नाम अविशेषसम जाति है। यदि तुम्हारा हेतु ठीक है तो मेरा क्यों ठीक नहीं, ठीक ही है—ऐसा कथन उपपत्तिसमा है ॥५३॥

दृष्टान्तः कथं साधकः? यदि कृतकत्वेत शब्दघटयोरैक्यात्, तथा सति सत्त्वप्रमेयत्वादिनैक्यात्सर्वोऽप्यनित्यः स्यादित्यनुपसंहारित्वापादानमविशेषसमः। नित्यः शब्दोऽस्पर्शत्वादिति हेतुरनुपपन्न इत्युक्त आह—यदि तव हेतुः कृतकत्वमुपपन्नो ममापि तथा कथं नेति। प्रतिपक्षिणोऽनुकूलतर्कदेशनाभास इत्युपपत्तिसमः। अत्र परपक्षस्वीकरणं साधर्म्यसमादिभ्यो वैलक्षण्यम्।

**निर्दिष्टसाधनमृतेऽप्युपलम्भात्साधनीयधर्मस्य ।**
**यदसाधनत्ववचनं कथितोऽसौ तूपलब्धिसमः ।। ५४ ।।**

निर्दिष्ट साधन के बिना भी साध्य उपलब्ध होता है अतः वह साधन नहीं है—यह उपलब्धिसमा जाति है ।।५४।।

वह्निमान् धूमादित्यादौ निर्दिष्टसाधनं धूमादिकं विनापि वह्नेरयः-पिण्डादौ कदाचित्पर्वतादौ चोपलम्भादसाधनं धूम इति वचनमुपलब्धिसमः ।। ५४ ।।

**तदनुपलब्ध्यग्रहतोऽनुपलब्धिसमस्तदस्तितावचनम् ।**
**साध्यापादनमखिले साधर्म्यवशादनित्यसमः ।। ५५ ।।**

शब्द में नित्यत्व की अनुपलब्धि होने से यदि अनित्यत्व है तो अनुपलब्धि की अनुपलब्धिहोने से नित्यत्व भी हो—यह अनुपलब्धिसमा है। घटगत कृतकत्व-साम्य से शब्द अनित्य है तो घटगतप्रमेयत्व साधर्म्य से गगन भी अनित्य हो—यह अनित्यसमा है ।

अनुपलब्धिसमामाह—तदिति। शब्द उत्पद्यते न त्वभिव्यज्यते। आवरणानुपलम्भादित्युक्ते आवरणानुपलब्धिर्नोपलभ्यत इत्यावरणमस्तीति वचनमनुपलब्धिसमः। प्रतिकूलतर्कदेशनाभासः। दृष्टान्तः कथं साधक इत्यत्र शब्दघटयोरविशेषादैक्यादिति प्रागुक्तोऽविशेषसमः। न ह्यैक्यात्। किन्तु साधर्म्यादिति ब्रूषे तदा प्रमेयत्वादिसाधर्म्यात्सर्वस्यानित्यत्वं प्राप्नोतीति गगनादिव्यतिरेकदृष्टान्तासिद्धिरित्ययमनित्यसमः ।। ५५ ।।

**साध्ये विकल्प्य धर्मं प्रतिवचनं स्याद्धेतु नित्यसमः ।**
**कार्यसमोऽनैकान्तिकवचनं हेतुं पुरस्कृत्य ।। ५६ ।।**

शब्द में अनित्यत्व नित्य है या अनित्य ? यदि नित्य है, तो धर्मी शब्द भी नित्य होगा। यदि अनित्य है, तो अनित्यत्व नष्ट होने पर नित्यत्व आयेगा—यह नित्यसमा है। यदि प्रयत्न साध्य होने से शब्द अनित्य है तो नित्यत्वपक्ष में भी अभिव्यक्ति प्रयत्नसाध्य होने से हेतु अनैकान्तिक है, यह कार्य समा है ।।५६।।

नित्यसमामाह—साध्य इति। शब्दोऽनित्य इत्यत्र साध्ये धर्मं विकल्प्य—अनित्यत्वं नित्यं न वा, प्रथमेऽनित्यत्वविनाशे नित्यत्वागमः। यदि नित्यं तदा धर्मिनित्यतां विना धर्मनित्यतानुपपत्तिरिति नित्यत्वसिद्धि-

रित्येवमहेतु व्याप्तिरहितं तर्करहितं वा वचो नित्यसमः। कार्यसमामाह— कार्येति—अनित्यः शब्दः प्रयत्ननान्तरीयकत्वाद् घटवदित्युक्ते उच्चारण-प्रयत्नं विनाऽभिव्यक्तेरपि विरहात् प्रयत्ननान्तरीयकत्वं नित्यत्वानित्यत्व-साधारणमित्यनैकान्तिकतादेशनाभासः। प्रयत्नविरहकालीनाभावप्रतियोगि-त्वमित्यतो न वस्तुतोऽनैकान्तिकता ॥ ५६ ॥

**इत्थं जातिविकल्पा मुनिनोक्ताः सन्ति चैवमन्येऽपि ।**
**स्यादेव किमपि दूषणमिति हि पिशाचीसमा दिगिति ॥५७॥**

इस प्रकार परमर्षि ने जातिविकल्प दोष बताये हैं। अन्य भी इस प्रकार के दोष हैं। 'पक्ष में अवश्य कोई दोष होगा'—यह पिशाचीसमा दोष है ॥५७॥

एते परमर्षिणोक्ता जातिविकल्पाः। आकृतिगणश्चायम्। यथा त्वत्पक्षे किमपि दूषणं स्यादेव मदीयगुरुविरुद्धत्वादिति पिशाचीसमा ॥ ५७ ॥

**कृतकः शब्दोऽनित्यः सत्त्वान्नित्यस्ततो ह्यनित्योऽस्तु ।**
**तर्हि मतानुज्ञा ते मैवं त्वत्पक्षदूषणतः ॥ ५८ ॥**
**कृतकत्वमनित्यत्वव्याप्यमतोऽनित्य उच्यते शब्दः ।**
**इति षट्पक्षीं विद्याद् यत्र हि जातेर्निराकरणम् ॥ ५९ ॥**

षट्पक्षीः—(१) शब्द अनित्य है कृतक होने से। (२) घटगतकृतकत्वसाधर्म्य से शब्द अनित्य है तो गगनगत सत्तासाधर्म्य से नित्य भी हो सकता है। (३) घट में भी तो सत्ता है, अतः घटगत सत्तासाधर्म्य से अनित्यत्व क्यों नहीं? (४) तथापि नित्यत्व भी आ जाने से मतानुज्ञा है। (५) ऐसा नहीं, आप अपने पाँव पर कुल्हाड़ा मार रहे हैं, यह मेरा तात्पर्य है। (६) वस्तुतः अनित्यत्व व्याप्यकृतकत्व से अनित्य ही है, यह मेरा भाव है। इस प्रकार की षट्पक्षी का प्रयोग जात्युत्तर स्थल में होता है ॥ ५८-५९ ॥

जात्युत्तरस्थले षट्पक्षी प्रवर्तते। शब्दोऽनित्यः कृतकत्वाद् घटवदिति प्रथमः। घटसाधर्म्येणानित्यत्वे सत्तासाधर्म्येण गगनादिवन्नित्यत्वं स्यादिति द्वितीयः। इदं स्वव्याघातकं सत्तासाधर्म्येण घटवदनित्यत्वमेवास्तु इति तृतीयः। एवं तर्हि मतानुज्ञेति चतुर्थः पक्षः। मैवं तव स्वव्याघातकत्व-लक्षणजात्युत्तरतां ब्रवीमीति पञ्चमः। वस्तुतोऽनित्यत्वव्याप्यं कृतकत्वमिति ततोऽनित्यं ब्रवीमीति तर्केण स्वमतपुनःस्थापनं षष्ठ इति षट्पक्षी। तदनन्तरं मध्यस्थेन कथा समापनीया। वृत्तिकारस्तु प्रकारान्तरमाशिश्रिये। इति जातिनिरूपणम् ॥ ५८-५९ ॥

**प्रतिज्ञाहानिः, प्रतिज्ञान्तरं, प्रतिज्ञाविरोधः, प्रतिज्ञासंन्यासो, हेत्वन्तर, मर्थान्तरं, निरर्थक, मविज्ञातार्थं, मपार्थक, मप्राप्तकालं, न्यून, मधिकं, पुनरुक्त, मननुभाषण, मज्ञान, मप्रतिभा, विक्षेपो, मतानुज्ञा, पर्यनुयोज्योपेक्षणं, निरनुयोज्यानुयोगो, ऽपसिद्धान्तो, हेत्वाभासाश्च निग्रहस्थानानि (५.२.१)**

**उद्भावितात् सतः स्या॒ यस्माद्वदतः पराभवः सदसि ।**
**तदुदीरितं प्रतिज्ञाहान्यादि हि निग्रहस्थानम् ।। ६० ।।**

सभा में विचार प्रवृत्त होने पर जिसके उद्भावन से वादी आदि पराजित हो जाये उन प्रतिज्ञा हानि आदि को निग्रहस्थान कहते हैं ।।६०।।

निग्रहस्थानान्याह—उद्भावितादिति । वादि-प्रतिवादि-मध्यस्थयुक्ता सभा परिषत् । तदेव सदः । एतेन पक्षप्रतिपक्षपरिग्रहानन्तर्यमपि सूच्यते । तत्र विचारे प्रवृत्ते यस्मादुद्भाविताद् वादिनः = वादिप्रतिवाद्यन्यतरस्य पराभवः = पराजयः स्यात् तत्प्रतिज्ञाहान्याद्यात्मकं निग्रहस्थानमुदीरितम् । उद्भाविता सती प्रतिज्ञाहानिर्निग्रहस्थानं न तु स्वरूपसती । अथवा सत इति वस्तुसदर्थकम् । तथा च पक्षप्रतिपक्षपरिग्रहोत्तरकालीनयद्रूपावच्छिन्न-विषयकबोधजनकशब्दप्रयोगः स्वप्रयोक्त्रितरवादिपराजयप्रयोजकस्तद्रूप-वत्वं निग्रहस्थानत्वम् । पराजयश्च प्रकृतशास्त्रार्थेऽपकर्षो न त्वपकर्षसामान्यं तेन त्वमगम्यागामीत्यादिप्रयोगविषये नातिव्याप्तिः । प्रतिज्ञाहान्याद्यन्यतमत्वं वा लक्षणम् ।। ६० ।।

**त्यागो यस्तु विशिष्य स्वयमेवोक्तस्य हेतुभिन्नस्य ।**
**आहुर्बुधाः प्रतिज्ञाहानिं तां स्वोक्तविनिषेधे ।। ६१ ।।**

हेतु से अतिरिक्त निजोक्त पक्ष आदि का प्रतिवादी द्वारा दोषोत्थापन करने पर परित्याग करना प्रतिज्ञाहानि कहाता है ।।६१।।

प्रतिज्ञाहानिमाह—त्याग इति । सदसीति सर्वत्रानुवर्तनीयम् । पक्ष-प्रतिपक्षपरिग्रहपूर्वत्वार्थकम् । स्वयं विशिष्योक्तस्य हेतुभिन्नस्य त्यागः पक्षादिविशेषणहानिः, पक्षादिहानिश्च । साध्यनिर्देशः प्रतिज्ञेति तद्धानौ हेतुहानिर्नान्तर्भवतीति हेतुभिन्नस्येत्युक्तम् । तत एव हेत्वन्तरं पृथगेव । दृष्टान्तः पक्षसदृश इति ग्राह्यः । आकरो वह्निमान् धूमादयोगोलकवदित्यत्र आकरे बाधे अस्तु तर्हि पर्वतो वह्निमानिति । नास्ति अयोगोलके धूम इत्युक्तेऽस्तु तर्हि महानसवदिति ।। ६१ ।।

**विनियोज्य हेतुभिन्ने पूर्वानुक्तं विशेषणं वचनम् ।**
**यदि तर्हि तत्प्रतिज्ञा-न्तरमाहुर्निग्रहस्थानम् ।। ६२ ।।**

हेतु से अतिरिक्त पक्षादि में दोषोत्थापनानन्तर विशेषण जोड़ना प्रतिज्ञान्तर नामक निग्रहस्थान है ।।६२।।

स्वोक्तविनिषेध इत्यनुवर्तते। हेत्वतिरिक्ते पूर्वानुक्तविशेषणं योजयित्वा कथनं प्रतिज्ञान्तरम् । द्रव्यमनित्यमिति निषेधे जन्यद्रव्यमनित्यमित्यादि ।।६२

**स्वोक्तिविरोधो यस्तं हेत्वाभासाद्विरोधनाम्नोऽन्यः ।**
**आचक्षते प्रतिज्ञा-विरोधसंज्ञं बुधा दोषम् ।। ६३ ।।**

अपने कथन का विरोध करने वाला प्रतिज्ञाविरोध नामक निग्रहस्थान है जो विरोधहेत्वाभास से पृथक् है ।।६३।।

प्रतिज्ञाविरोधमाह—स्वोक्तीति। स्वोक्तिश्च स्वोक्तिश्च तयोर्विरोधः। विरोधहेत्वाभासस्य पृथङ्निग्रवस्थानत्वात्तद्भिन्नः। यज्ञहिंसाऽपापमपि पापमेव हिंसात्वादित्यादि। यो धूमवान् स निर्वह्निरिति उदाहरणे ।। ६३ ।।

**स्वाभिहितप्रतिषेधे स्वयमभिहितवस्तुनो यदपलपनम् ।**
**तमगादिषुः प्रतिज्ञासंन्यासं निग्रहस्थानम् ।। ६४ ।।**

निजोक्त मत का प्रतिषेध होने पर अपनी बात से मुकर जाना—मैंने ऐसा कहा ही नहीं, आदि—प्रतिज्ञासंन्यास कहा जाता है ।

यज्ञहिंसा पापं हिंसात्वादन्यहिंसावदित्युक्तेऽन्यत्र तीर्थेभ्य इति श्रुतेर्मैव-मिति प्रतिषेधे को वा ब्रवीति यज्ञहिंसा पापमिति वृथा तवायमारोप इति प्रतिज्ञासंन्यासः ।। ६४ ।।

**पूर्वोक्तहेतुधर्मादन्येन विशिष्टहेतुवचनं यत् ।**
**हेत्वन्तरं तदाहुर्धर्मविवृद्धाविति तु वृद्धाः ।। ६५ ।।**

पूर्वोक्त हेतुतावच्छेदक धर्म से भिन्न किसी हेतुतावच्छेदक से विशिष्ट हेतु का उपन्यास हेत्वन्तर निग्रहस्थान है क्योंकि उसमें अधिक धर्म दिखाया जाता है ।

हेत्वन्तरमाह—पूर्वोक्तेति। स्वाभिहितप्रतिषेधे पूर्वोक्तहेतुतावच्छेद-कातिरिक्तहेतुतावच्छेदकविशिष्टहेतुवचनम् । शब्दोऽनित्य ऐन्द्रियकत्वादि-त्युक्ते घटत्वादौ व्यभिचारमाह। तत्राह—सामान्यवत्त्वे सतीतिविशेष-णान्तरम् ।। ६५ ।।

**अर्थान्तरं तदाहुः प्रकृतानाकाङ्क्षिताभिधानं यत् ।**
**यदवाचकपदवचनं निरर्थकं तज्जगुर्दोषम् ।। ६६ ।।**

प्रकृत में अनाकांक्षित अर्थ को बताने वाला वचन अर्थान्तर नामक निग्रह-स्थान है । अवाचक पदों का प्रयोग निरर्थक नामक निग्रह स्थान है ।। ६६ ।।

प्रकृतानुपयुक्तार्थकथनमर्थान्तरम् । यथा शक्तिसाधकानुमानं पदमर्थ-सम्बन्धि तत्स्मारकत्वादित्यत्रेश्वरेच्छयार्थान्तरता । अवाचकपदवचनं निर-र्थकम् । जबगडत्वादित्यादि ।। ६६ ।।

**वचनमविज्ञातार्थं परिषत्प्रतिवाद्यबुद्धमुदितं त्रिः ।**
**तदपार्थकमाकाङ्क्षाशून्यं चेत्सार्थपदवृन्दम् ।। ६७ ।।**

जिसको तीन बार कहने पर भी सभासदादि समझ न पायें वह अविज्ञातार्थ है । आकाङ्क्षारहित सार्थक पद समुदाय अपार्थक निग्रहस्थान है ।।६७।।

अविज्ञातार्थमाह—वचनमिति । आकाङ्क्षाशून्यमित्युत्तरार्धादिदं साका-ङ्क्षमिति लभ्यते । त्रिरुदितमिति कथानियमपूर्त्यर्थम् । कदाचित्कासावधान-तामात्रेण विजयपराजयव्यवस्था मा भूदिति । परिषदित्यवहिताविकल-व्युत्पन्नो जनसमुदायः । जिष्णुकुलिशच्छेद्यः शिवसुतपितृसखवानित्यादि । पर्वतो वह्निमानिति तदर्थः। तदिति । तदेवाकाङ्क्षाशून्यत्वेऽपार्थकम् । सार्थपदवृन्दमित्युभयान्वयि । परिषदाद्यबुद्धमिति न सम्बन्धनीयम् । पर्वतस्य वह्निमन्तं धूमादित्यादि ।। ६७ ।।

**अप्राप्तकालमुक्तेर्विपरीतो यः क्रमः कथाक्रमतः ।**
**न्यूनावयवं न्यूनमनुद्धृतसमदोषमिति तु परे ।। ६८ ।।**

कथा में परम्परा-प्राप्त क्रम का उल्लंघन कर बोलना अप्राप्तकाल निग्रहस्थान है । पाँच अवयवों से कम बोलना या परोक्त सभी दोषों का उद्धार न करना न्यून निग्रहस्थान है ।। ६८ ।।

अप्राप्तकालमाह—अप्राप्तेति । कथायां यः क्रमः पारम्पर्यागतः—प्रथमं वादिना वक्तव्यं, ततः प्रतिवादिना दूषणादिकं, पुनर्वादिना दूषणोद्धारपूर्वक-स्थापनमिति यः क्रमः तत्र दूषणमनुद्धृत्य स्थापनं, वादिवक्तव्यासमाप्ता-वेव मध्ये चोदनादिकमप्राप्तकालम् । धूमाद्वह्निमान् पर्वत इत्यादिकमपि केचिदाहुः । अवयवा न विपर्ययेण वक्तव्या विशेषणविशेष्यसन्देहाद्यापत्ते-रिति । न्यूनमाह—न्यूनेति । तदेतत्परे न सहन्ते । प्रतिज्ञादिकं त्रयमुदा-

हरणादिकं वा त्रयमिति परैः स्वीकारात् । तन्मते किं न्यूनं ? तत्राह—अनुद्धृतेति । अनुद्धृताः समे सर्वे दोषा यस्मिंस्तद्वचनम् । न च तदा मतानुज्ञैवेति वाच्यम् । अननुज्ञानात् । न स्वीकृतं न च प्रतिषिद्धमिति न्यूनमेव ॥ ६८ ॥

**हेतूदाहरणादेरधिकस्य वृथाभिधानमधिकं स्यात् ।**
**अर्थं विना समार्थकपुनरभिधानं तु पुनरुक्तम् ॥ ६९ ॥**

एक से अधिक वृथा हेतु या उदाहरण का कहना अधिक नामक निग्रहस्थान है । विना प्रयोजन के समान तात्पर्यवाली बात दुहराना पुनरुक्ति नामक निग्रहस्थान है ।

अधिकमाह—हेत्विति । पर्वतो वह्निमान् धूमादालोकाच्च । महानसवच्चत्वरवच्चेत्यादौ । दूषणाधिक्यमपि केचिदाहुः । पुनरुक्तमाह—अर्थं विनेति । अर्थं = विशेषप्रयोजनं विना समार्थकस्य = समानतात्पर्यार्थकस्य पुनरभिधानम् । अनुवादस्य सार्थकत्वादर्थं विनेत्युक्तम् । पर्वतो वह्निमान्, पर्वते वह्निरित्यत्रापि पुनरुक्तिरतः समानतात्पर्यार्थविवक्षा ज्ञेया ॥ ६९ ॥

**विज्ञातस्य परिषदा त्रिरभिहितस्याननूत्तरणमाहुः ।**
**मोहाविवृतावकृते क्षेपेऽननुभाषणं दोषम् ॥ ७० ॥**

वादी ने जिस बात को तीन बार दुहरा भी दिया तथा सभासदों ने समझ भी लिया फिर भी उसका उचित उत्तर न दे पाना अननुभाषण दोष है ॥ ७० ॥

अननुभाषणमाह—विज्ञातस्येति । वादिना त्रिरभिहितस्य परिषदा विज्ञातार्थस्यानुकूलोत्तराभावमननुभाषणदोषमाहुः । अज्ञानं विक्षेपं च व्यावर्तयितुमाह-मोहाविवृत्तौ-अज्ञानाप्रकाशने । विक्षेपाकरणे च ॥ ७० ॥

**एकांशानुवदनतस्तद्विपरीतानुवदनतश्चैव ।**
**स्तम्भाद्दूषणमात्रादनुवदनात्सर्वनाम्ना च ॥ ७१ ॥**

अननुभाषण पांच प्रकार का होता है :—एकांशानुवाद से, विपरीत अर्थानुवाद से, मौन रहने से, दूषणमात्र देने से और केवल सर्वनाम द्वारा अनुवाद करने से ।

निरर्थकापार्थकादिवारणाय हेतूनाह—एकांशेति । वाद्युक्तस्यैकांशानुवादाद्, विपरीतार्थानुवादात् तूष्णींभावाद्, दूषणमात्राभिधानात्, सर्वनाममात्रेणानुवादात् । त्वदुक्तमयुक्तमित्यादि । अननुभाषणं पञ्चधा भवति ॥७१॥

**अज्ञानं तस्याऽप्रति-बोधोऽप्रतिभा तथोत्तरास्फुरणम् ।**
**विक्षेपः स तु कार्य-व्यासङ्गाद् या कथाविहतिः ॥ ७२ ॥**

तीन बार बताने पर भी न समझना अज्ञान दोष है। उत्तर का स्फुरण न हो तो अप्रतिभा है तथा अन्य कार्य द्वारा कथा में विक्षेप करना विक्षेप दोष है।

अज्ञानाऽप्रतिभाविक्षेपांस्त्रीन्दोषानाह—अज्ञानमिति। तस्य = विज्ञातस्य परिषदा त्रिरभिहितस्याऽप्रतिबोधोऽज्ञानं नाम निग्रहस्थानं, नाहं त्वदुक्तं गृह्णामीत्यादिवचनलिङ्गम्। तथोत्तरस्यास्फुरणमप्रतिभा। खसूचन-श्लोकावर्तनादिलिङ्गम्। वाद्युक्तानुवदनमत्र विशेषः। कार्यव्यासङ्गमुद्भाव्य कथाविहनने विक्षेपः। अवास्तविककार्यव्यासङ्गो द्रष्टव्यः। तेन गृहदाहशिरोवेदनादौ कथाविच्छेदने न निग्रहः॥ ७२॥

**अभ्युपगम्य सदोषं निजपक्षं परदूषणं मतानुज्ञा।**
**पर्यनुयोज्योपेक्षणमनिग्रहो निग्रहार्हस्य॥ ७३॥**

अपने पक्षको सदोष स्वीकारकर प्रतिवादी के पक्ष को भी दूषित कहना मतानुज्ञा कहा जाता है। निग्रह के योग्य का निग्रह न करना पर्यनुयोज्य उपेक्षण कहा जाता है॥ ७३॥

मतानुज्ञामाह—अभ्युपगम्येति। स्वपक्षं सदोषं स्वीकृत्य परदूषणं मतानुज्ञा। यद्यपि स्वपक्षे दोषमभ्युपगम्यानुद्धृत्येति व्याख्यातं भाष्ये। तथापि भवत्पक्षेऽपि समानो दोष इति तत्रैव भाष्येऽपिकारसमानशब्दाभ्यां स्वपक्षदोषाभ्युपगम एव विवक्षितः। तेन परपक्षदूषणमात्रेऽननुभाषणस्यैवाचार्यादिभिः स्वीकारेऽपि न क्षतिः। नन्वेवमपि परदूषणात्परस्य निग्रहः स्यादिति चेन्न। यश्चोभयोः समो दोष इति न्यायकवलितत्वात्परनिग्रहानुपपत्तेः। पर्यनुयोज्योपेक्षणमाह—परीति। निग्रहार्हस्य = निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम्। एतच्च जयपराजयव्यवस्थायां मध्यस्थेनोद्भाव्यम्॥ ७३॥

**योऽनिग्रहणीये छल-जात्याभासैर्विनिग्रहः क्रियते।**
**अनवसरग्रहणेन च स निरनुयोज्यानुयोगः स्यात्॥ ७४॥**

निग्रह के अयोग्य का छल, जाति, आभास से या अनवसर ग्रहण से निग्रह करना निरनुयोज्यानुयोग कहते हैं॥७४॥

निरनुयोज्यानुयोगमाह—य इति। निग्रहायोग्ये यो विनिग्रहः क्रियते स निरनुयोज्यानुयोगः। क्वचिच्छलेन। पर्वतो वह्निमानित्यत्राऽवह्निमानिति च्छित्वा बाधाद्युद्भावनम्। जात्या प्राग्प्रदर्शितम्। आभासेन व्यभिचारे-

ऽसिद्धयाद्युद्भावनम् । अनवसरग्रहणेन—शब्दोऽनित्य इत्युक्ते शब्दस्थाने ध्वनिरुच्यते तदा प्रतिज्ञाहानिः । अन्यथा बाध इत्यादि । किं च तत्रैव न प्रतिज्ञाहानिर्बाधो वा प्रत्यक्षतोऽनित्यत्वग्रहणादित्यनन्तरमाह प्रतिवादी नित्यः शब्दः प्रत्यभिज्ञायमानत्वादिति । तव प्रत्यभिज्ञा न स्यादिति । तदानीमाह त्वं पूर्वं स्वमतस्थापनं नाकार्षीरतोऽननुभाषणं तदा जातमिति ।

**प्रच्यवनं तु कथायां स्वीकृतसिद्धान्ततोऽपसिद्धान्तः ।**
**हेत्वाभासाश्च यथा प्रोक्ता एवानुयोक्तव्याः ।। ७५ ।।**

कथा मे स्वीकृत सिद्धान्त से प्रच्युति अपसिद्धान्त कहाता है । इनसे अतिरिक्त हेत्वाभासों को भी निग्रहस्थान समझ लेना चाहिये ।।७५।।

कथायां स्वीकृतसिद्धान्ततः प्रच्यवनं स्वीकृतसिद्धान्तविरोधेनाभिधानमिति यावत् । सोऽपसिद्धान्तः । हेत्वाभासाश्च यथा प्रोक्ता एव निग्रहस्थानत्वेनापि बोद्धव्याः । नात्र पृथक् तल्लक्षणमावश्यकमिति भावः ।। ७५ ।।

**दृष्टान्ताभासानां हेत्वाभासाभिधानतो लाभम् ।**
**वार्तिककारो मेने तस्मात्ते चेह विज्ञेयाः ।। ७६ ।।**

दृष्टान्ताभास नामक निग्रहस्थान हेत्वाभास के अन्तर्गत होने से पृथक् विवेचित नहीं किया गया—यह वार्तिककार मानते हैं । अतः उन्हें भी निग्रहस्थानरूप मान लेना चाहिये ।।७६।।

दृष्टान्ताभासानामिति । तथा च प्रतिज्ञाविरोधसूत्रे वार्तिके—दृष्टान्ताभासाश्च कस्मान्निग्रहस्थानेषु नोक्तो हेत्वाभासपूर्वकत्वाद् दृष्टान्ताभासानां तदभिधानेनैवोक्ता वेदितव्या इति । उपलक्षणतयोक्ता इत्यर्थः । एतेन सूत्रे यथोक्ता इत्यस्यानन्वयापत्ति वदन्तः प्रत्युक्ताः । परे तु पर्वतो वह्निमान् धूमात् यथा ह्रद इत्यत्र स्वोक्तिविरोधरूपप्रतिज्ञाविरोधोऽस्तीति नात्रोपलक्षणमावश्यकमित्याहुः ।। ७६ ।।

इति निग्रहस्थाननिरूपणम्

**अपवर्गः सर्वेषां तत्त्वज्ञानात् फलं पदार्थानाम् ।**
**यमनियमैः संस्कारादात्मन एतत्तथा योगात् ।। ७७ ।।**

इन सब पदार्थों के तत्त्वज्ञान से अपवर्ग फल होता है । यह तत्त्वज्ञान यम, नियम, आत्मा के संस्कार तथा योगशास्त्रोक्त उपायों से होता है ।

उक्तानामेतेषां सर्वेषां पदार्थानां तत्त्वज्ञानात्फलमपवर्गो भवति । एतत्तत्त्वज्ञानं तु यमनियमैरात्मनः संस्कारात्—पुण्यप्रचयपापनाशाभ्यां भवति तथा योगाद् = योगशास्त्रोक्तोपायाद् भवति ॥ ७७ ॥

**ज्ञानग्रहणाभ्यासस्तद्विद्यैर्योगिभिश्च संवादः ।**
**प्रज्ञापरिपाकार्थं कर्तव्यो मोक्षकामयुतैः ॥ ७८ ॥**

मोक्ष की कामना वाले को संशयरहित प्रज्ञा की प्राप्ति के लिये शास्त्र का अभ्यास शास्त्रवेत्ताओं से और योगियों से संवाद करना चाहिये ।

ज्ञानमत्र शास्त्रं, शास्त्रग्रहणाभ्यासः, तद्विद्यैः = शास्त्रतत्त्ववेदिभिः सह संवादश्च प्रज्ञापरिपाकार्थं = संशयरहितप्रज्ञालाभार्थं मोक्षकामिभिः कर्तव्यः ।

**शिष्यगुरुसतीर्थ्यैश्च विशिष्टैः श्रेयोऽर्थिभिश्च निरसूयैः ।**
**सद्विद्यानुपगच्छेत्तत्त्वज्ञानं यतः सम्यक् ॥ ७९ ॥**

असूया रहित शिष्य या गुरु या सतीर्थ्यों के साथ और विशिष्ट श्रेयोर्थियों के साथ तत्त्ववेत्ता सिद्ध पुरुषों के पास जाना चाहिये जिससे ज्ञान की शुद्धि हो ।

शिष्यादिभिः सह सद्विद्यान् प्रसिद्धान् यदृच्छयागताम् वोपगच्छेत् । कीदृशैः ? निरसूयैः = विजिगिषारहितैः । विशिष्टाः = शास्त्रेणानुशिष्टाः प्रकृष्टज्ञानवन्तो वा । किमर्थमुपगच्छेत् ? यतः सम्यग्ज्ञानं भवेत् । इदमत्र सूच्यते । निरसूयत्वादेव प्रथमं शिष्यैः गुरुभिः सतीर्थ्यैश्च संवादं कुर्यात् । ये च विशिष्टा समीपगा विद्वांसस्तैरपि सह संवादं कुर्यात् । पुनः सर्वैः सह ज्ञानपौष्कल्यार्थं सद्विद्यानुपगच्छेदिति ॥ ७९ ॥

**दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदन्तरापायादपवर्गः । ( १.१.२ )**

**तत्त्वज्ञाने मिथ्याज्ञानं दोषाः प्रवृत्तिरपि जन्म ।**
**क्रमशोऽपेयुर्दुःखापायात्तेनावर्ग इति ॥ ८० ॥**

इस प्रकार तत्त्वज्ञान से मिथ्या ज्ञान का निरास होने पर सभी दोष नष्ट होते हैं । अतः प्रवृत्ति भी नहीं होती । जिससे जन्म-प्रसक्ति नहीं होती और दुःखापाय से अपवर्ग होता है ।

इत्थं तत्त्वज्ञानाद् द्रव्यादिधर्मिकसुखसाधनत्वादिविषयकमिथ्याज्ञाननिराकृतौ रागद्वेषमोहाः स्वयं निवर्तन्ते । ततश्च योगजनितपुण्यप्रचय-

निवृत्तसकलपापस्याग्रिमपुण्यपापप्रयोजकप्रवृत्त्यपाये जन्माभावः। न च योगजपुण्यात्पापमेव निवर्तेत न पुण्यमिति स्वर्गादिलोकगमनं स्यादिति वाच्यम्। तत्त्वज्ञानस्य सकलपुण्यफलत्वात्। तथा चोक्तं "सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यत" इति। ज्ञानपर्यवसायि सर्वं यज्ञादिकर्मेत्यर्थः। अथवा योगजधर्मस्याशुक्लाकृष्णत्वात्ततः पापस्येव पुण्यस्यापि निवृत्तिः। न च पुण्यस्य पापनिवर्तकत्वं नास्ति। अन्यथा सुखदुःखयोर्द्वयोरेकस्य पुंसोऽनुपपत्तेः। तत एव पापनिवृत्त्यर्थं पृथक् प्रायश्चित्तविधानमिति वाच्यम्। "कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषामि"ति भगवत्पतञ्जलिना पुण्यादिकर्मणां योगीतरमात्रसम्बन्धित्वोक्तेः। अथवा यमनियमजनितसंस्कारयोगशास्त्रावबुद्धप्राणायामादिपरिपाचितात् शास्त्राभ्यास-तद्विद्यसंवादादिसमुद्भूतपदार्थपरमार्थज्ञानादेव सकलकर्मनिवृत्तिः। तथा चोक्तं भगवता—'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुत" इति। न च भाष्यकारेणापवर्गकारणतयैव योगाचारोऽभिहितः "उपायस्तु योगाचारविधानमि"ति तदुक्तेरिति वाच्यम्। परम्परया साधनत्वेऽपि भाष्यसंगतिसंभवात्। अन्यथा तत एवोपपत्तौ एतदुत्तरं ज्ञानग्रहणाभ्यासतद्विद्यसंवादानुपयोगात्तद्वर्णनं सूत्रभाष्यकृतोरसंगतं स्यात्। एतेन योगजसंनिकर्षजनितसकलसाक्षात्कार एव ज्ञानाग्निपदार्थ इत्यपि समाहितम्। नन्वेवं "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग" इति पारम्पर्येण क्रमिकहेतुप्रतिपादनसूत्रासांगत्यम्, साक्षादेव ज्ञानेन कर्मनाशे मोक्षोपपत्तेः। भाष्मप्यत्रैव समञ्जसम्। इन्द्रियविषयेषु प्रसंख्यानाभ्यासो रागद्वेषप्रहाणार्थः। उपायस्तु योगाचारविधानमि"ति हि भाष्यम्। तत्र प्रसंख्यानपदार्थतत्त्वज्ञानस्य मिथ्याज्ञाननाशनमुखरागद्वेषादिदोषहानार्थताया एवोक्तेरिति चेत् ? न। भवतोपि योगाचारलभ्यालौकिकसंनिकर्षेण साक्षात्कार एव भवति। ततो मिथ्याज्ञाननिवृत्तिरिति स एव क्रम आपतति। तत्र स्वतन्त्रकारणपरम्पराद्वयस्वीकारे गौरवाद् योगेनैवोपपत्तौ शास्त्रवैयर्थ्यापत्तेश्च योगसहकृतशास्त्राभ्यासजनिततत्त्वसाक्षात्कारस्यैव मिथ्याज्ञाननाशकत्वोपपत्तेः। पूर्वकृतपुण्यपापानामपि तत एव निवृत्तावपि संजायमानरागद्वेषादीनां क्रियमाणकर्मणां च का गतिरित्यतः पारम्पर्यकथनोपपत्तिः। तत्त्वज्ञाने सति स्वत एव मिथ्याज्ञानं निवर्तते, स्वत एव रागादयो न जायन्ते, स्वत एव प्रवृत्तिर्न भवति इति न ततो जन्मप्रसक्तिः। संचितानां ज्ञानेन निवृत्तिरिति ततो जन्मापाये दुःखापायादपवर्ग इति सर्वं चतुरस्रम्।

जयमङ्गलयतिकलिता विमला सिद्धान्तरत्नमालेयम् ।
बोधाय विविदिषुणां भूयान्मोदाय विदुषां च ।। ८१ ।।

श्री जयमङ्गलाचार्य नामक परमहंस विरचित यह विमल 'सिद्धान्तरत्नमाला' जिज्ञासुजनों को स्पष्ट ज्ञान तथा विद्वानों को सुख देने वाली हो ।

इति श्रीमज्जयमङ्गलाचार्य महामण्डलेश्वर काशिकानन्दयति
विरचिता न्यायसिद्धान्तरत्नमाला संपूर्णा
शुभं भूयात्

——

# ग्रन्थकार के मुख्य प्रकाशन

| | |
|---|---|
| जागदीशीसामान्यलक्षणतत्त्वप्रदीपः | २५.०० |
| वैराग्यमन्दाकिनी सानुवाद | दुष्प्राप्य |
| गोपीगीत अर्थद्वय | ,, |
| दश शान्तयः | ,, |
| दक्षिणामूर्तिस्तोत्रं सवार्त्तिकं सानुवादम् | ,, |
| वेदान्तसिद्धान्तकुसुमाञ्जलिः सौरभटीका | १२.०० |
| ईशावास्यं शांकरभाष्यं रहस्यविवरणम् | ३०.०० |
| ईशावास्योपनिषत् सवार्त्तिकं शांकरभाष्यं सानु० | अ० ३०.०० स० ४०.०० |
| शंकरदिग्विजयः सानुवादः | अजिल्द २०.०० स० ३०.०० |
| नारदीयभक्तिसूत्र सानुवाद सवार्त्तिक तीन भाग | ३०.०० |
| भागवतसारस्तोत्रं सानुवाद | १२.०० |
| भीष्मस्तुति प्रवचन (गुजराती) | दुष्प्राप्य |
| महिम्नः स्तोत्रं हरिहरपक्षीयहिन्दीव्याख्या | ५.०० |
| महिम्नः स्तोत्रं सानुवादं स्पन्दवार्त्तिकं | ३०.०० |
| गीताप्रवचन सांख्यसन्दर्भ २ भाग | पूर्वार्धं ३५.०० |
| ,, ,, स्थितिप्रज्ञदर्शनम् | २५.०० |
| गीताप्रवचन ध्यानयोगसन्दर्भ दो भाग | ५०.०० |
| वेदान्तसिद्धान्तपीयूषबिन्दुः सानुवाद | १०.०० |
| वेदान्तसारः वेदान्तमन्दारमाला च सानुवादौ | १२.०० |
| सुभगोदयस्तोत्रं (तन्त्रम्) अमृतझरिकाव्याख्या | अ० ३०.०० स० ४०.०० |
| दिव्यरसतरङ्गिणी कादम्बिनी टीका | अ० १२.०० स० २०.०० |
| द्वादशदर्शनसंग्रहः सानुवाद पद्यात्मक | अ० ८०.०० स० ९५.०० |
| न्यायसिद्धान्तरत्नमाला (नव्यन्यायः) | २४.०० |